# पत्रकाव्यम्

## द्वितीयो भागः



प्रिय संस्कृतरसिकाः,

प्रार्थयेऽहमत्र भवतां कृते
दीर्घायुर्भवतां सदा सुखकरं भूयात्, मनोहारिणी
कीर्तिर्दिक्षु विदिक्षु च प्रसरताद्युस्तावच्चेयाऽनिशम्।
हर्षश्चेतसि च प्रमादविमुखे बुद्धौ च वैशारदी
ग्रन्थानां रचनाविधौ च भवताच्छार्दूलविक्रीडितम् ॥

सत्यव्रतशास्त्री

# पत्रकाव्यम्

## ( द्वितीयो भागः )

प्रणेता

**सत्यव्रतशास्त्री**

दिल्ली-विश्वविद्यालय-संस्कृत-विभाग-प्राक्तनाचार्योऽध्यक्षश्च
पुरीस्थश्रीजगन्नाथसंस्कृतविश्वविद्यालयप्राक्तनकुलपतिः
सम्प्रति जवाहरलाल नेहरू विश्वविद्यालयस्थ-
विशिष्टसंस्कृताध्ययनकेन्द्रेऽभ्यर्हिताचार्यः




ईस्टर्न बुक लिंकर्स

दिल्ली : : (भारत)

प्रकाशक :
ईस्टर्न बुक लिंकर्स
5825, न्यू चन्द्रावल, जवाहरनगर
दिल्ली-110007
फोन : 23850287, 32919869
e-mail : books@eblindology.com
ebl@vsnl.net
Website : www.eblindology.com

प्रथम संस्करण : 2009



मूल्य : 700.00

ISBN : 978-81-7854-154-9

पत्रकाव्यम्
सत्यव्रतशास्त्री

मुद्रक : आर.के. प्रिंट सर्विस, दिल्ली

# PATRAKĀVYAM

*Satya Vrat Shastri*
Honorary Professor, Special Centre for
Sanskrit Studies, Jawaharlal Nehru University
Formerly Professor and Head, Department of
Sanskrit, University of Delhi
Ex-Vice-Chancellor Shri Jagannath Sanskrit University
Puri (Orissa)




**Eastern Book Linkers**
DELHI : : (INDIA)

Publishers :
**EASTERN BOOK LINKERS**
5825, New Chandrawal,
Jawahar Nagar, Delhi-110007
Ph. : 23850287, 32919869
e-mail : books@eblindology.com
ebl@vsnl.net
Website : www.eblindology.com



First Edition : 2009

Price : 700.00

ISBN : 978-81-7854-154-9

---

**Patrakāvyam**
**Satya Vrat Shastri**

---

Printed at : R.K. Print Service, Delhi

# आत्मनिवेदनम्

मम संस्कृतपद्यमयपत्राणां सङ्कलनं १९९६ तम ईशवीये संवत्सरे पत्रकाव्यमिति नाम्ना प्राकाश्यमभजत। सम्प्रति द्वादश वर्षाणि तस्य प्राकाश्यं गतस्य। अत्रान्तरे नाना पत्राणि मया स्वबन्धुभ्यः प्रेषितानि। तान्यपि प्राकाश्यं भजेरन्निति धिया तेषां सङ्कलनमत्र पत्रकाव्यस्य द्वितीयभागरूपेण प्रकाश्यते। पत्रेष्वेषु पूर्ववदेव कुशलपरिप्रश्नाद्यतिरेकेण नाना शास्त्रीया विषयाः परामृष्य ये विदुषां विनोदाय कल्पेरन्। मध्ये मध्ये यत्र यत्र व्याकरणदृष्ट्याऽर्थदृष्ट्या वा केचन विशिष्यः प्रयोगाः समाश्रितास्तद्व्याख्यानाय तत्र तत्र टिप्पण्योऽपि समायोजिताः सूत्रवार्तिकाद्युद्धरणपुरःसरं कोषासवाक्याद्युद्धरणपुरःसरं च। तदेतद् वैशिष्ट्यमस्य पत्रसङ्ग्रहस्य। पूर्वतने सङ्ग्रहे नैतदस्ति। तदपेक्षितमिति कैश्चन सुहृज्जनैः प्रेरितो ऽहमत्रात्मानं व्यापीपरम्।

श्लोकानुक्रमण्या नात्र किञ्चिद्विशिष्टं सिध्यतीति सा ऽत्र परिहृता। छन्दोऽनुक्रमणी स्थानादिनामानुक्रमणी तु सन्दर्भार्थमपेक्ष्येते इति धिया सङ्ग्रहेऽत्र समावेशिते एव।

यानि पद्यमयानि पत्राणि तत्तद्विद्वद्भिरद्यावधि मयि प्रेषितानि तान्यत्र परिशिष्टरूपेण समावेशितानि। एतेन पद्यमयानि पत्राणि यानि मयाऽद्यावध्यन्येषु प्रेषितानि यानि वा तैर्मयि प्रेषितानि तानि सर्वाण्यपि प्राकाश्यं गच्छन्ति। अपूर्वोऽयं ज्ञानराशि-र्ग्रन्थरूपेण विद्वत्कराङ्गुलिप्रणयितां गच्छतीति कृतिनमात्मानं कलयामि।

एतद्ग्रन्थस्थं परःसहस्रपद्यात्मकं महान्तं पद्यराशिं पदवाक्यप्रमाणज्ञेभ्यो विद्वद्धुरीणेभ्यः समर्पयन्नहं कञ्चनानन्दातिरेकमनुभवामि प्रत्येमि च यत्तेभ्यो ऽयं स्वदेतेति। एवं समासत एव स्वां गिरमिमामुपन्यस्यन् विरमाम्यहं–

विदां विधेयः

सत्यव्रतः शास्त्री

नवदिल्ली

१३.३.२००८

# विषयानुक्रमणिका

२८.१०.१९९१ दिनाङ्के दिल्ली संस्कृताकादम्याऽऽयोजितेऽखिलभारतीयसंस्कृतपत्रकारसम्मेलने वाचितम्

(अनुष्टुब्वृत्तम्)

शुक्लाम्बरधरां शुक्लां वीणापुस्तकधारिणीम्।
भक्तक्षेमङ्करां नित्यं वाग्देवीं प्रणमाम्यहम्।।१।।

(इन्द्रवज्रावृत्तम्)

दिग्भ्यो विदिग्भ्यः समुपेयिवांसः
सन्तो भवन्तः प्रतिभानवन्तः।
प्राचामपाचां विदुषां सुवाचा-
माचामकाः प्राग्रहरा जयन्ति।।२।।

(अनुष्टुब्वृत्तम्)

धन्यतां राजधान्यद्य गता दिल्लीतिसञ्ज्ञिता।
गीर्वाणवाणीविदुषां समवायोऽत्र तिष्ठति।।३।।

(उपजातिवृत्तम्)

विपश्चितामत्र समागमेन
हर्षप्रकर्षो हृदि नो न माति।
इन्दोः कराणां प्रसरेण विष्वक्
स्यादुत्सवः कैरवकाननस्य।।४।।

माध्वीकमाधुर्यधरा धरायां
गीर्वाणगीर्लोकहिताय, यस्याः।
रसं प्रकामं परिपाययन्तो
लोकेऽत्र लोकान् विलसन्ति सन्तः।।५।।

सञ्चालने संस्कृतपत्रिकाणाम्
असंशयं कष्टपरम्परैव।
सोढ्वाऽपि तां तत्र कृताभियोगा
धन्या भवन्तो जगतीतलेऽत्र।।६।।

**२०.६.१९९३ दिनाङ्के भिवानीस्थान् पण्डितशिवनारायणशास्त्रिणः प्रति प्रेषितं पत्रम्**

**(अनुष्टुब्वृत्तम्)**

प्रियेभ्यः पण्डितशिवनारायणशास्त्रिभ्यः स्वस्ति।

आसीषदं भवत्पत्रमविन्दं च मुदं पराम्।
भवत्स्नेहप्रतीकं तद् दूरस्थोऽहं विभावये।। १।।

प्रूफस्थं पत्रकाव्यं मे निपुणं यत्परीक्षितम्।
स्वकीयोद्भावनाभिश्च यत्र तत्र परिष्कृतम्।। २।।

हर्षो मे जायते तेन तोषश्च गिरगोचरः।
ह्लादाय सततं सत्यं विदुषां सूक्ष्मदर्शनम्।। ३।।

राज्ञोमिति प्रयोगो ऽस्ति सर्वथा शिष्टसम्मतः।
ओमाङोश्चेतिसूत्रेण पररूपं विधीयते।। ४।।

क्षेमङ्करेतिशब्दोऽपि निर्दुष्टोऽस्ति तथैव हि।
क्षेमप्रेमादिसूत्रस्थश्चकारः खच्विधायकः।। ५।।

अरुर्द्विषदजन्तस्येत्यनेन खचि नुम् भवेत्।
इत्येवोक्त्वा समासेन स्निग्धो ह्यत्रभवत्स्वहम्।। ६।।
शास्त्रानुशीलने नित्यं रक्तेषु शुभदृष्टिषु।
आशीराशिं सम्प्रयुज्य गिरं स्वामुपसंहरे।। ७।।

भवन्मङ्गलाभिलाषी
**सत्यव्रतः शास्त्री**

१५.१०.१९९३ दिनाङ्के पुरीस्थान् डा० सूर्यमणिरथमहाभागान् प्रति प्रेषितं पत्रम्

(अनुष्टुब्वृत्तम्)

समवाप्य भवत्पत्रं स्नेहसारेण संयुतम्।
संस्कृते बद्धचित्तस्य प्रहर्षः परमो मम।।११।।

विस्तृता रचिता या ऽस्ति पत्रकाव्यसमीक्षणा।
तत्कृतेऽभिष्टुयां वाचा कया ऽहं भवतो बुधान्।। २।।

(उपजातिवृत्तम्)

सूक्ष्मेक्षिकासंवलितां नितान्तं
विराजितां भावसमुच्चयेन।
परिश्रमेणातितरां निबद्धां
प्रीतः पठित्वाऽस्मि भवत्समीक्षाम्।। ३।।

भवेत् कदाचिद्यदि बुद्धिभेद-
स्तत्तत्स्थलेषु प्रतिभाविलासात्।
न तत्र चित्रं किमपीति मन्ये
विचारभ़ेदो न न बोभवीति।। ४।।

दलेति शब्दो बहुशः प्रयुक्तः
पत्रार्थ इत्यत्र न संशयोऽस्ति।
शिष्टप्रयुक्तत्ववशात्प्रणुन्न-
स्तस्य प्रयोगं स्वकृतावकार्षम्।। ५।।

कृतेर्ममांशो नहि यो विमृष्ट-
स्तत्रापि चेत्स्याद्भवतां विमर्शः।

तोषो भवेत्तेन मम प्रकृष्टो
हेम्नः परीक्षाऽनल एव शस्या।। ६।।

व्यापारयेयुर्यदि तत्र सन्तः
कृतौ कृती स्यामिति नात्र शङ्का।
इत्येतदुक्त्वा प्रणयी सुहृत्सु
वाचं स्वकीयामुपसंहरामि।। ६।।

भवद्गुणगणावर्जितहृदयोऽहं
सत्यव्रतः शास्त्री

**३१.१२.१९९३ दिनाङ्के नलेटी ( कांगड़ा ) वास्तव्यान् श्री दुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्**

**मान्या महाकवयः,**

जयतु भारती।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसाः सस्नेहं प्रहिता मयि।
भवद्भिर्विदुषां वर्यैः प्रमोदं मेऽददुः परम्।।१।।

प्रार्थये पार्वतीजानिं भवतामपि भूतये।
वर्षेऽस्मिन्नूतने विज्ञास्तद्धि प्रियतरं मम।।२।।

संस्कृताराधने सक्ता अहोरात्रं भवादृशाः।
साधनानामभावेऽपि विरला एव भूतले।।३।।

माधुर्यौजःप्रसादाद्यैर्गुणैर्जुष्टा अलङ्कृताः।
प्रहर्षनिर्भरं कुर्युर्भवद्गीःप्रसरा न कम्!।।४।।

पत्रकाव्यमिति ख्यातो मदीयः पत्रसङ्ग्रहः।
साम्प्रतं मुद्रणाधीनो ऽचिरात् प्राकाश्यमेष्यति।।५।।

परस्सहस्रैः पद्यैस्तत्राना पत्रगतैः शुभैः।
जुष्टं सत्यं वितन्वीत प्रमोदमिति मे मतिः।।६।।

पत्राणि तत्र सन्त्येव भवद्भिः प्रहितान्यपि।
कानिचित्पद्यबद्धानि स्नेहसिक्तेन चेतसा।।७।।

काव्ये प्राकाश्यमाप्ते ऽस्मिन् शीघ्रं प्रेरयितास्म्यहम्।
इदं भवद्भ्यो विद्वद्भ्य उपायनमिति ध्रुवम्।।८।।

तत् सन्तो द्रष्टुमर्हन्ति सदसद्व्यक्तिहेतवः।
भवद्दृक्पातमात्रं स्यादस्य सम्भावनेति शम्।।९।।

**इति हृदयोद्गारा भवदभिन्नहृदयस्य**
**सत्यव्रतस्य शास्त्रिणः**

**१३.२.१९९४ दिनाङ्के खेकड़ास्थान् डा०रामकिशोरमिश्रमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्या महाकवयः,**

जयतु श्रीहरिः।

(उपजातिवृत्तम्)

पत्रं यथाकालमवाप्य नाहं
तदुत्तरं प्रेरयितुं समर्थः।
अभूवमित्यत्र मदीयनैक-
यात्राप्रसङ्गोऽस्ति निमित्तभूतः।। १ ।।

क्षमापये विज्ञवरांस्तदर्थं
क्षमापरा ज्ञानधना भवन्ति।
नैवापराध्येज्जगतीतलेऽस्मिन्
न कोऽपि ना भोः स्थितिरेव तादृक्।। २ ।।

सम्प्रेषिता सद्भिरमन्दमाधात्
प्रमोदमेकाङ्कचमत्कृतिर्मे।
चमत्कृताः स्यू रसिका अवश्यं
कृत्यैतयेत्यत्र न संशयो मे।। ३ ।।

आमूलचूलं पठितो मयास्ति
विचित्र एकाङ्कसमुच्चयोऽयम्।
चमत्कृतो येन रसाप्लुतत्वा-
दानन्दकोटिं परमां गतोऽस्मि।। ४ ।।

धन्या बुधप्राग्रहरा भवन्तो
गीर्वाणवाणीकविकर्मधुर्याः।
नानारसालङ्कृतिभिः सुपुष्टं
काव्योत्करं यद्रचयन्ति लोके।।५।।

(अनुष्टुब्वृत्तम्)

मयि सन्ति न ये ग्रन्था भवद्भी रचिता ध्रुवम्।
तद्विषये दिनैर्द्वित्रैर्बुधान् सूचयितास्म्यहम्।।६।।

इति निवेदना
सत्यव्रतशास्त्रिणः

१४.२.१९९४ दिनाङ्के श्रीशुकदेवमुनिमहाभागान् प्रति प्रेषितं पत्रम्

मान्या विद्वद्वरेण्या,

जयतु भारती

(अनुष्टुब्वृत्तम्)

पत्रमासाद्य भावत्कं प्रहर्षः परमो मम।
ईषदूनं भवत्येतत्सङ्गमादिति सूरयः।।१।।

आशिषो विदुषो याचे न तु वर्धापना अहम्।
अरोगी नित्यमेव स्यां शास्त्रशीलनतत्परः।।२।।

संस्कृताराधने सक्तस्तत्प्रचारोद्यतस्तथा।
आयुःशेषं यापयेयमित्येवाभिमतं मम।।३।।

शरीरसादो मे भूयान् बहु कार्यं च शिष्यते।
नीयेत पूर्णतां तच्चेत् कालेन स्यामहं सुखी।।४।।

अहर्निशं ततः कार्ये निजं व्यापारयाम्यहम्।
मया प्रणेयाः सन्त्येव नाना ग्रन्था विदां वराः!।।५।।

अपूर्णा अर्धपूर्णा वा साम्प्रतं मयि ते स्थिताः।
नेयास्ते पूर्णतां सत्यं नो चेद् व्यर्थो भवेच्छ्रमः।।६।।

इत्येतदर्थं सम्प्रार्थ्य भवतामाशिषः शुभाः।
भवद्गुणगणाकृष्टः स्वां वाचमुपसंहरे।।७।।

सुरसरस्वतीसमाराधनैकव्रतोऽहं

सत्यव्रतः शास्त्री

**३०.८.१९९४ दिनाङ्के मुम्बापुरीस्थान् श्री एस० बी० वेलणकरमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्या,**

जयतु भारती।

(अनुष्टुब्वृत्तम्)

भवद्भी[१] रचितं प्राप्य पत्रकाव्यसमीक्षणम्।
जातो मे मनसस्तोषः कश्चिद्वाचामगोचरः।।१।।

कृतिः कृतिभ्यः[२] श्रीमद्भ्यो यदरोचत तन्मम।
आधासीन् निर्वृतिं चित्ते विद्वत्तोषो हि दुर्लभः।।२।।

अभविष्यत्समीक्षा चेद्विस्तृता तद् ध्रुवं मम।
अकरिष्यत्तरां प्रीतिं हेतुस्तत्रास्ति कश्चन।।३।।

अर्वाचीनेतिपूर्वांशसंस्कृतेत्यपरांशवाक्।
पत्रिकाऽखिलमत्काव्यसमीक्षारूपिणं शुभम्।।४।।

विशिष्टाङ्कं बृहत्कायं प्रकाशयितुमिच्छति।
अतो दीर्घा समीक्षा स्यात्तदर्थमुपयोगिनी।।५।।

भवतां सम्मतं चेत्स्यात् स्यादस्या उपबृंहणम्।
मयैवेति तदर्थं द्राग् भवदाज्ञा प्रतीक्ष्यते।।६।।

कार्यमेतद्विधातुं स्युः समर्थाः स्वयमेव चेत्।
कविधुर्याः सहृदया नातः परतरं वरम्।।७।।

इति निवेदना विनयावनतस्य

**सत्यव्रतशास्त्रिणः**

---

१. रो रि इति प्रथमरेफलोपे पूर्वस्याणो दीर्घः।

२. रुच्यर्थानां प्रीयमाणः (१.४.३३) इत्यनेन चतुर्थी।

५.९.१९९४ दिनाङ्के नलेटी (कांगड़ा) स्थान्
श्रीदुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्

परमप्रिया,
जयतु भारती।

(अनुष्टुब्वृत्तम्)

मृगयेत्यभिधानो यो भवतां काव्यसङ्ग्रहः।
प्राकाश्यमेति तेनास्मि सुतरां तुष्टमानसः।। १ ।।

प्रसन्ना मधुरा चापि भवतां काव्यभारती।
करोत्येव विशेषज्ञान् प्रमोदभरनिर्भरान्।। २ ।।

अन्तःकरणभावान् स्वान् सूक्ष्मान् शैलीविशेषतः।
पुरः प्रस्तुवती रम्या कविताऽऽह्लादकारिणी।। ३ ।।

अनुप्रासमयः पद्यबन्धो ऽद्यत्वे विलोक्यते।
न तत्र भावगाम्भीर्यं नैव वा पृथगर्थता।। ४ ।।

भवतां काव्यमाधुर्यं स्वारस्यं च विशेषतः।
सचेतसां बहुज्ञानां चेतांस्याकर्षतो भृशम्।। ५ ।।

समेधेत भवत्काव्यं वर्धेत च भवद्यशः।
इत्येव गुणमुग्धेन भवत्स्वाशीः प्रयुज्यते।। ६ ।।

मया
सत्यव्रतशास्त्रिणा

५.९.१९४४ दिनाङ्के पुरीस्थान् डा० केशवचन्द्रदाशमहोदयान् प्रति प्रेषितं पत्रम्

प्रिया,

विलसन्तु दूरबन्धोर्मे नैका आशिषः।

(अनुष्टुब्वृत्तम्)

शिखेति शशिरेखेति दधती नामनी शुभे।
उपन्यासद्वयी प्राप्ता गद्यस्य निकषायिता ।।१।।

उपन्यासा मया पूर्वमामूलं परिशीलिताः।
भवद्भी रचिता रम्या निपीतश्चापि तद्रसः।।२।।

उपन्यासद्वयीमेतामपि शीलयितास्म्यहम्।
रसं तदीयं मधुरं निपातास्मि च निर्भरम्।।३।।

रमणीया भवच्छैली रम्या च प्रतिपादना।
रमणीयं च वस्त्वेतत् त्रितयं रम्यमेव हि।।४।।

सांस्कृते वाङ्मये नूत्ने नूत्ना शब्दावलिर्मया।
अन्विष्यते प्रयत्नेन विनोदस्तत्र मेऽधुना।।५।।

परश्शता मया शब्दा नवीनाः परिलक्षिताः।
साहित्यस्रष्टृभिः सत्यं कल्पिता अधुनातनैः।।६।।

भवद्ग्रन्थोत्करस्तत्र विषये मे सहायकः।
तदर्थमप्यहं तावत्कलये तमनुत्तमम्।।७।।

शैलीवैशिष्ट्यकलने चापि तस्योपयोगिता।
महती मत्कृते तात! प्रवृत्तिस्तत्र मे ततः।।८।।

शतद्वयादप्यधिका ग्रन्था अक्षरशो मया।
रचिता वाचिता सूक्ष्मं युगेऽस्मिन्नधुनातने।।९।।

सामग्री महती चापि मयि सम्प्रति वर्तते।
परिश्रमेण महता यास्ति सङ्कलिता मया।।१०।।
कालेन ग्रन्थरूपेण तां प्रस्तोतुं मनोरथः।
मम, येन भवेत्सैषा जनानां सुलभा शुभा।।११।।

इत्येवोक्त्वा समासेन प्रभुं प्रार्थ्य भवच्छुभम्।
गिरां सत्यव्रतः शास्त्री विरामं तनुतेऽधुना।।१२।।

९.११.१९९४ दिनाङ्के नलेटी ( कांगड़ा ) स्थान् श्री दुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्

**मान्या महाकवयः,**
**सप्रश्रयं वन्दे।**

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसासूचकं भवतां दलम्।
आसाद्य ह्योऽपराह्णेऽहं परं हर्षमवाप्नवम्।। १ ।।

मत्कृते सत्यमेवैताः शुभाशंसाः शुभाशिषः।
या अहं कामये नित्यं तपोवृद्धेभ्य आदरात्।। २ ।।

यद्यत्कार्यमपूर्णं मे तत्तत्सम्पूर्णतां व्रजेत्।
इत्येवास्त्यभिलाषो मे नाधिकं किञ्चिदिष्यते।। ३ ।।

भवन्तो विदुषां धुर्याः कवीनां मुकुटे स्थिताः।
वाक्सिद्धिस्तेन परमा भवत्सु प्रविलोक्यते।। ४ ।।

वाक्सिद्ध्या तयका[१] देया आशिषो मे निरन्तरम्।
तेनैव कार्यसिद्धिर्मे तेनैव च शुभं परम्।। ५ ।।

इति संक्षेपतो न्यस्य स्वकान् भावान्कृताञ्जलिः।
भवद्गुणगणाकृष्टः वाचं स्वामुपसंहरे।। ६ ।।

**भवत्सु स्निग्धः**
**सत्यव्रतः**

---

१. अव्ययसर्वनाम्नामकच् प्राक् टेः (५.३.७१) इत्यनेन स्वार्थेऽकच्। तयैवेत्यर्थः।

१४.१.१९९५ दिनाङ्के दिल्लीस्थान् श्री मदनलालकुमारियामहाभागान्
प्रति प्रेषितं पत्रम्

प्रिया भ्रातृवर्याः,
सस्नेहं प्रणतयः।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसां भवद्भिः प्रेषितां मयि।
स्नेहसंवलितां प्राप्य शुभमेव भवेन्मम।।१।।

पद्यमय्यो गिरो यास्तु भावावेशाद्विनिःसृताः।
भवतां, न भवेत्तत्र किञ्चिदन्यद्विचिन्तितम्।।२।।

शब्दो वाऽप्यपशब्दो वा यो वा को वा भवेन्ननु।
प्रधानं शब्द एवास्ति नापशब्दः कथञ्चन।।३।।

प्रत्येकं पदतः स्नेहो भवतां मय्यकिञ्चने।
स्फुट इत्यहमात्मानं धन्यं मन्ये विचक्षणाः!।।४।।

सर्वं लभ्येत जगति जनेन सुखमैहिकम्।
स्वत एव समुद्भूतो भ्रातृस्नेहस्तु दुर्लभः।।५।।

स स्नेहो नूतने वर्षे वृद्धिं भूयोऽपि गच्छतु।
इति सम्प्रार्थ्य भूतेशं गिरं स्वामुपसंहरे।।६।।

भवदभिन्नहृदयोऽहं
सत्यव्रतः

**१६.१.१९९५ दिनाङ्के दिल्लीस्थान् पं० अमीरचन्द्रशास्त्रिणः प्रति प्रेषितं पत्रम्**

**मान्येभ्यः प्रणामाञ्जलयः।**

(उपजातिवृत्तम्)

अवाप्य पत्रं भवतां चिराय
स्नेहातिसंसर्गनिसर्गरम्यम्।
अम्भोनिधावम्भ इवेन्दुपादै-
र्हर्षप्रकर्षो हृदि मे न माति।।१।।

वर्धापनामाशिषमेव मान्या!
भवत्प्रयुक्तां कलयेऽतिदिव्याम्।
आसामहं पात्रगतो भवेय-
मित्येव सम्प्रार्थनमस्ति मेऽद्य।।२।।

श्रीराधिकासेवितमञ्जुकुञ्जे
श्रीकृष्णपादाम्बुजरक्तभक्ते।
वृन्दावने, संरचिताधिवासा
धन्या भवन्तो जगतीतलेऽत्र।।३।।

(अनुष्टुब्वृत्तम्)

मार्चमासे कदाचिन्मे तत्रागमनसम्भवः।
तदा द्रष्टास्मि भवतस्तन्मे सुखकरं भवेत्।।४।।

इत्येवोक्त्वा समासेन निध्याय भवतां शुभम्।
प्रह्वः सत्यव्रताह्वोऽहं वाचं स्वामुपसंहरे।।५।।

**१७.३.१९९५ दिनाङ्के पुण्यपत्तनस्थान् श्री मां० पां० डेग्वेकरमहाभागान्**
**प्रति प्रेषितं पत्रम्**

**मान्या विद्वद्वर्या,**
**जयतु भारती।**

(अनुष्टुब्वृत्तम्)

स्नेहोपायनरूपेण भवद्भिः प्रेषितां कृतिम्।
परेद्यवि समासाद्य परं हर्षमुपागमम्।। १।।

अतिथौ सर्वदेवानां निवास इति भावना।
सर्वेषां भारतीयानां न सन्देहोऽत्र कश्चन।। २।।

सांस्कृते वाङ्मये यावान् सन्दर्भो ऽतिथिसंयुतः।
स सर्वोऽपि कृतावस्यां निपुणं परिशीलितः।। ३।।

भूयान् श्रमः कृतोऽत्र स्याद्भवद्भिरिति तर्कये।
नैतावान् ग्रन्थसम्भारस्तद्विना शक्य ईक्षितुम्।। ४।।

धन्या भवन्तो विद्वत्सु मूर्धन्या इति मे मतम्।
देववाणीसपर्यायां सक्ता एकाग्रचेतसा ।।५।।

**इति मे प्रणामाञ्जलिः**
**भवद्गुणगणावर्जितमानसस्य**
**सत्यव्रतस्य शास्त्रिणः**

४.८.१९९५ दिनाङ्के खेकड़ास्थान् डा० रामकिशोरमिश्रमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या महाकवयः,
सप्रश्रयं नतिततयः।

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य प्रहर्षः परमो मम।
घनाघनाम्बुसम्प्राप्त्या चातकस्येव पक्षिणः।।१।।

भवद्वर्धापनां मन्ये पुण्यानां मम सत्फलम्।
भवादृशां वरेण्यानामाशिषो ह्यति दुर्लभाः।।२।।

सरस्वतीसपर्यायां प्रसितः सन् निरन्तरम्।
अनपेक्ष्यान्यकर्माणि कालं स्वं गमयाम्यहम्।।३।।

पञ्चोत्तराणि यातानि षष्टिर्वर्षाणि मे बुधाः।
अवशिष्टं च कार्यं मे बहु तत्तुदतीव माम्।।४।।

बहोः कालान्मया पूर्वं प्रारब्धा अतिविस्तृताः।
अपूर्णा एव तिष्ठन्ति ग्रन्था नैके ऽधुनाऽप्यहो!।।५।।

तदर्थमेव चिन्ता मे साम्प्रतं सम्प्रवर्तते।
शक्तः स्यां पूर्णतां नेतुं तान् कालेन कथञ्चन।।६।।

शुभाशंसाभरोऽवश्यं पितॄणामाशिषस्तथा।
कल्याणं मे विधास्यन्ति तदेवाश्वासनं मम।।७।।

स्मर्तव्यः स्नेहभावेन काले काले बुधोत्तमैः।
एतद्भवत्सु सम्प्रार्थ्य गिरं स्वामुपसंहरे।।८।।

भवदभिन्नहृदयोऽहं
सत्यव्रतः

२६.१२.१९९५ दिनाङ्के होशिआरपुरस्थान् श्रीजगदीशप्रसादसेमवालमहाभागान् प्रति प्रेषितं पत्रम्

मान्याः कविवरेण्या,

जयतु भारती।

(उपजातिवृत्तम्)

अवाप्य पत्रं भवतां मनोज्ञं
मुदां भरो माति न मे ऽन्तरङ्गे।
इन्दोः कराणां प्रसरेण विष्वग्
यथाऽम्बुपूरोऽम्बुनिधेः प्रवृद्धः।। १ ।।

वर्धापनार्थं सुतरां स्वकीयं
कृतज्ञभावं ज्ञपयामि[1] विज्ञाः।
सम्प्रार्थये च प्रभुमप्रमेयं
यशोऽवदातं भवतां पृथिव्याम्।। २ ।।

काव्यक्रियायां नितरां प्रसक्तो
रक्तस्तथा शास्त्रविवेचनायाम्।
वार्धक्यकाले वपुषा कृशोऽपि
सुखेन कालं व्यतियापयामि।। ३ ।।

अर्धावशिष्टा मम सन्ति नैके
ग्रन्था मया ये प्रणिनीषितास्ते।
प्रयान्तु पूर्णत्वमितीयमद्य
चिन्ता मदीये प्रसृतान्तरङ्गे।। ४ ।।

---

१. ज्ञप मिच्च इत्यनेन मित्सञ्ज्ञायां मितां ह्रस्व (७.५.१२) इत्यनेन ह्रस्वः।

याचे तदर्थं भवतः शुभेच्छां
तयैव सिद्धिः परमा भवेन्मे।
इत्येव सर्वं विनिवेद्य सत्सु
वाचं स्वकीयामुपसंहरामि।।५।।

भवद्गुणगणावर्जितमानसोऽहं
सत्यव्रतः।

४.१.१९९६ दिनाङ्के नलेटी (काङ्गड़ा) स्थान् श्री दुर्गादत्तशास्त्रिमहाभागान् प्रति प्रेषितं पत्रम्

मान्या महाकवयः,
सविनयं प्रणमामि।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसापत्रमासाद्य शोभनम्।
भवतां नहि मे माति हर्षो वाचामगोचरः।। १।।

सहजो भवतां स्नेहो यो मय्यस्ति विदां वराः!
अभिभूतोऽस्मि तेनेति न वाक् प्रसरतीह मे।। २।।

नववर्षे भवन्तोऽपि मोदमानाः स्वके दमे।[१]
अनन्तं सुखमेधन्तामित्येव प्रार्थना मम।। ३।।

भवदभिन्नहृदयस्य
सत्यव्रतस्य

---

१. अत्र वैदिकप्रयोगच्छाया-इहैव स्तं मा वियौष्टं मोदमानौ स्वे दमे। दम इति गृहनाम। स्वे दमे=स्वे गृहे।

### ४.१.१९९६ दिनाङ्के श्रीचन्द्रभूषण झा महोदयान्प्रति प्रेषितं पत्रम्

**प्रिया बन्धुवर्याः,**

**सस्नेहाशिषः।**

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
अमन्दानन्दसन्दोहं व्यतन्वन् मम मानसे।।१।।

मम पाथेयभूतास्ता जीवनाध्वनि दुर्गमे।
नवोत्साहं मम स्वान्ते जनयिष्यन्त्यसंशयम्।।२।।

भूयान् कर्तव्यशेषो मे सम्प्रत्यप्यस्ति यो मया।
कालेन पूर्णतां नेयस्तदर्थं ता अपेक्षिताः।।३।।

नातिस्वस्थोऽपि कायेन क्लान्तिं चानुभवन् मनाक्।
यापयामि स्वकं कालं काव्यशास्त्राद्यवेक्षणे।।४।।

क्षणशश्चिन्तयेद्विद्यामिति शास्त्रवचः स्मरन्।
विद्योपार्जनसंसक्तो नान्यत् किञ्चिद्विचिन्तये।।५।।

वितीर्य ह्याशिषो नैकाः शुभंयुर्भवतामहम्।
स्नेहसंसिक्तहृदयो वाचं स्वामुपसंहरे।।६।।

सदा मङ्गलाभिलाषी
सत्यव्रतः

**२२.७.१९९४ दिनाङ्के नलेटी (कांगड़ा) स्थान् श्रीदुर्गादत्तशास्त्रिण: प्रति प्रेषितं पत्रम्**

**मान्या महाकवय:,**
सुरभारती विजयतेतराम्।

(अनुष्टुब्वृत्तम्)

षष्ठे दिनेऽस्य मासस्य पत्रं यत्प्रेषितं शुभम्।
दिनत्रयात्प्राक् तदभूल्लब्धमत्र मया बुधा:!।। १ ।।

पुत्रपौत्रौ समायातौ भवतां मे कुटीरकम्।
आश्वासितौ स्वसाहाय्यं यथाशक्ति मया च तौ।। २ ।।

विषयान्तरमाश्रित्य वचोऽहं स्वं प्रवर्तये।
अधुना, यद्भवद्भ्योऽपि रोचेतैव न संशय:।। ३ ।।

भवद्भि: प्रहितानि स्युर्नाना पत्राणि संस्कृते।
स्निग्धेष्वतीव विज्ञेषु भवत्सु पितृभिर्मम।। ४ ।।

सन्ति वा तानि किं मान्या! भवत्स्विति लिखन्तु माम्।
प्रकाशनेच्छा तेषां मे चित्ते समुदिता यत:।। ५ ।।

येषु येष्वपि विद्वत्सु भवेत् तत्पत्रसङ्ग्रह:।
तांस्तान् सम्प्रार्थये सर्वांस्तत: सम्प्राप्तिकाम्यया।। ६ ।।

एकस्माद्विदुष: प्राप्ता मया शतचतुष्टयी।
तत्पत्राणामजनयद्या मे परमविस्मयम्।। ७ ।।
अन्येष्वपि भवेदेवं तदीय: पत्रसङ्ग्रह:।
प्राप्तिस्तस्याप्यभीष्टा मे क: श्रेयसि नु तृप्यति?।। ८ ।।

उत्तराभिलाषी



सत्यव्रत:

२.८.१९९४ दिनाङ्के नलेटी ( कांगड़ा ) स्थान् श्री दुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्

मान्या महाकवयः,

जयतु भारती।

(अनुष्टुब्वृत्तम्)

अपराह्णे भवत्पत्रमद्यैवासादितं मया।
लब्धश्च तेन सुतरां मोदो वाचामगोचरः।। १।।

पत्राणि तातपादानां त्रीण्यासन् यानि सत्सु मे।
तानि सम्प्रेष्य सुतरां कार्तार्थ्यं गमितोऽस्म्यहम्।। २।।

अमूल्योऽयं निधिर्यत्र तत्र लभ्यो भवेद् ध्रुवम्।
तदर्थं मे दिवारात्रं प्रयासः प्रचलिष्यति।। ३।।

नाना पत्राणि विद्वद्भ्यस्तन्मित्रेभ्यो मयाऽधुना।
तत्पत्राणां सङ्ग्रहार्थं प्रेषितानि विचक्षणाः!।। ४।।

सुरक्षितानि स्युस्तानि तेषु चेत्ते ह्यसंशयम्।
कार्यगौरवमालोक्य प्रेषयिष्यन्ति तानि माम्।। ५।।

अकादमीस्थसमितेर्नवा सङ्घटनाऽभवत्।
न सदस्योऽस्म्यहं तस्या अधुनेति वचो मम।। ६।।

तथाऽपि प्रार्थयिष्येऽहमितरान् कोविदाग्रगान्।
तत्सदस्यान्मयि स्निग्धान् साहाय्यशुभकर्मणि।। ७।।

इति सामासिकं वचो भवत्स्नेहवशंवदस्य

सत्यव्रतशास्त्रिणः

९.१.१९९६ दिनाङ्के दरभङ्गास्थान् डा० जयमन्तमिश्रमहाभागान् प्रति प्रेषितं पत्रम्

मान्या विद्वच्छिरोमणयः

सादरं प्रणामाः।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसाः पत्रेण प्रेषिता मयि।
हर्षवर्षमवर्षन्मे चित्ते वाचामगोचरम्।। १।।

(उपेन्द्रवज्रावृत्तम्)

निरन्तरं शास्त्रचये कृतश्रमा
विलक्षणप्रौढिविभूषिता बुधाः।
दिगन्तविश्रान्तयशोविलासिनो
भवादृशाः सन्ति न भूरि भूतले।। २।।

कृपाकटाक्षेण कृतार्थतां गतो
भवादृशानां विबुधाग्रगामिनाम्।
न पूर्ववत्स्वास्थ्यमहं वहन्नपि
स्वकीयकार्याणि करोमि कोविदाः!।। ३।।

(द्रुतविलम्बितवृत्तम्)

समुदितो मुदितो निजबन्धुभिः
कविकृतीरवलोक्य कृती भवन्।
रसमयं समयं गमयन् भवत्-
सुहृदहं हृदहङ्कृतिवर्जितः।। ४।।

इति निवेदयते
भवद्गुणगणावर्जितहृदयः
सत्यव्रतः शास्त्री

२९.३.१९९६ दिनाङ्के थाईदेशमहाराजकुमारीं प्रति तस्या द्विचत्वारिंशत्तम-जन्मदिवसोपलक्ष्ये प्रेषिताः शुभाशंसाः

(उपजातिवृत्तम्)

प्रजाजनाराधनबद्धभावा
देशे विदेशे प्रथितप्रभावा।
सदा गुणज्ञेषु कृतानुभावा
जीव्याः सुखं त्वं शरदां शतानि।।१।।

प्रभातवेलेव विभासितार्था
क्षीरोदवेलेव विशुद्धरूपा।
सर्वंसहेलेव दृढा स्वमार्गे
जीव्याः सुखं त्वं शरदां शतानि।।२।।

शास्त्राटवीसञ्चरणाभिषक्ता
निरन्तरं भक्तजनानुरक्ता।
वाक्येषु शाक्यस्य मुनेः प्रसक्ता
जीव्याः सुखं त्वं शरदां शतानि।।३।।

तत्त्वार्थविज्ञा विगताभिमाना
बुधाग्र्यवर्गे परिदत्तमाना।
कलेव चन्द्रस्य विवर्धमाना
जीव्याः सुखं त्वं शरदां शतानि।।४।।

दिगन्तविश्रान्तयशःप्रकर्षा
देशान्तरालोकननित्यतर्षा।
विद्वज्जनानुग्रहवान्तवर्षा
जीव्याः सुखं त्वं शरदां शतानि।।५।।

गीर्वाणवाणीप्रणयप्रणुन्ना
कविक्रियाचित्रकलादिनुन्ना।
दरिद्रितव्याधितकष्टतुन्ना
जीव्याः सुखं त्वं शरदां शतानि।। ६।।

(अनुष्टुब्वृत्तम्)

चत्वारिंशत्तमे पुण्ये द्व्यधिके जन्मनो दिने।
सत्यव्रतेन प्रीतेन प्रेष्यन्ते शुभकामनाः।। ७।।

१८.६.१९९६ दिनाङ्के थाईदेशमहाराजकुमारीं प्रति तत्पितुर्महाराजस्य काञ्चनाभिषेकमभिलक्ष्य प्रेषितानि पद्यानि

## काञ्चनाभिषेकाष्टकम्

(इन्द्रवज्रावृत्तम् उपजातिवृत्तञ्च)

अस्त्येशियानामनि सुप्रसिद्धे
द्वीपे विशाले ऽतिविशालकीर्तिः।
आग्नेयदिङ्मण्डलमौलिभूतो
देशोऽतिरम्यो भुवि थाइलैण्डः।। १।।

राजा प्रजारञ्जनमादधानः
सर्वात्मना बुद्धवचःप्रमाणः।
अतुल्यतेजःपदवीं दधानः
प्रशास्ति यं भूमिबलाभिधानः।। २।।

सुतोऽस्ति यः श्रीनखरीन्द्रनाम्न्याः
प्रियो जनन्या विबुधप्रियायाः।
ज्ञानार्जने या सततप्रसक्ता
गीर्वाणवाण्यां निपुणत्वमाप।। ३।।

माधुर्यदाक्षिण्यगुणाकरोऽसौ
नक्तन्दिवं दीनजनार्तिहारी।
लोकाभिरामो नवमोऽस्ति रामः
जनेन यस्मै क्रियते प्रणामः।।४।।

देशोत्तमं सम्प्रति शासतोऽस्य
वर्षाणि पञ्चाशदपेतवन्ति।

अर्धं शताब्द्या अभिषिक्त एष
न्यायेन धर्मेण प्रजाः प्रशास्ति।।५।।

पितेव यं पश्यति सर्वलोकः
सर्वात्मना स्निह्यति चापि तस्मै।
बद्धादरस्तं प्रति देववच्च
शुभं सदा प्रार्थयते च तस्य।।६।।

पुण्येऽद्य गुण्यस्य हि काञ्चनेऽस्य
राज्ञोऽभिषेके सुखदे समन्तात्।
देशे विदेशे जनता समस्ता
हर्षस्य कोटिं परमां गताऽस्ति।।७।।

दीर्घायुरस्य प्रथितस्य राज्ञः
स्वास्थ्यं च सम्प्रार्थयते निकामम्।
यशश्च दिव्यं विततां च कीर्तिं
कुन्देन्दुमुक्तावलिशुभ्ररूपाम्।।८।।

१७.९.१९९६ दिनाङ्के श्रीरामनारायणपाण्डेयमहोदयान् प्रति प्रेषितं पत्रम्

मान्या विद्वद्वर्याः,
सादरं प्रणतिततयः।

(अनुष्टुब्वृत्तम्)

पत्रद्वयीं समासाद्य भवतां स्नेहसंयुताम्।
अमन्दानन्दसन्दोहमन्वविन्दमहं ध्रुवम्।।१।।

पत्रकाव्यं भवद्दृष्टेर्गतं गोचरतामिति।
भवद्भ्यो रुचितं तच्चेत्यहं सन्तोषमाप्नवम्।।२।।

प्राज्ञैः परीक्षिते ग्रन्थे तैश्चापि समभिष्टुते।
प्रभवत्येव तत्कर्तुः स्वत आनन्दनिर्झरः।।३।।

सुभाषितानामद्यत्वे सङ्ग्रहे निरतोऽस्म्यहम्।
सहस्रं तानि निपुणं चेयानीति मतिर्मम।।४।।

अनूदितानि हिन्द्या च वाचाऽऽङ्गल्या च तान्यहम्।
प्रकाशयितुमिच्छामि लोकसङ्ग्रहकाम्यया।।५।।

आयासो मे महानत्र तथाप्यत्र रतोऽस्म्यहम्।
आनन्दानुभवो मेऽत्र कश्चिद्वाचामगोचरः।।६।।

(उपजातिवृत्तम्)

गीर्वाणवाणीप्रणयप्रणुन्नाः
सदा तदाराधनसम्प्रवृत्ताः।
विद्वद्वरा विप्रकुलावतंसा
धन्या भवन्तो धरणीतलेऽत्र।।७।।

पुरोत्तमे पाटलिपुत्रनाम्नि
कार्यात्कुतोऽप्यागमनं भवेच्चेत्।
मम, ध्रुवं दर्शनकाम्यया‌ऽहं
भवद्गृहानेत्य मुदा युतः स्याम्।।८।।

इत्येव संक्षेपधिया ऽत्र वाचं
प्रयुज्य कालव्यतिपातभीरुः।
उदारवाचो भवतः प्रणम्य
गिरं स्वकीयामुपसंहरामि।। ९।।

विद्वदाश्रवः
सत्यव्रतः शास्त्री

**२६.९.१९९६ दिनाङ्के नलेटी ( कांगड़ा ) स्थान् श्री दुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्**

**मान्या महाकवयः,**
**सस्नेहं प्रणतिततयः।**

(अनुष्टुब्वृत्तम्)

सप्ताहात्पूर्वमेवाहं प्रत्यावृत्तो विदेशतः।
आसीषदं भवत्पत्रं स्नेहसारेण संयुतम्।।१।।

आसाद्य यत्परां काष्ठां गतः प्रीतेरहं बुधाः।
मत्कृते भवतां पत्रं सत्यमेवोत्सवायते।।२।।

न सन्ति बहवो लोके भवादृक्षा बुधोत्तमाः।
तत्त्वभूताः सरस्वत्याः कवीनां धुरि कीर्तिताः।।३।।

कविब्रुवास्तु सन्त्येव भूरिशो बकवृत्तयः।
सारसानां बहुत्वेऽपि सत्यं हंसाः सुदुर्लभाः।।४।।

पत्रं लब्धं चिरेणेति सुतरां विमनायितः।
वर्षेऽग्रिमे ऽहं नियतं प्रयसिष्याम्यपेक्षितम्।।५।।

अकादम्या ध्रुवं दिल्ल्याः सचिवे निर्णयक्षमे।
निमन्त्रणाय भवतामनुरोधो भवेन्मम।।६।।

काले काले जनो ह्येष भवद्गुणगणादरी।
स्मर्तव्य इति सम्प्रार्थ्य वाचं स्वामुपसंहरे।।७।।

**सदा भवन्मङ्गलाभिलाषुकोऽहं**
**सत्यव्रतः शास्त्री**

**२.१२.१९९७ दिनाङ्के फरीदाबादस्थ डा० बदरीनाथकल्लामहोदयान् प्रति प्रेषितं पत्रम्**

**आदरणीया विद्वद्वर्या,**
**जयतु भारती।**

(अनुष्टुब्वृत्तम्)

कश्मीरक्रन्दनेत्याख्यं भवद्भिः प्रेषितं मयि।
काव्यरत्नं महद् दुःखं हृदये मे व्यजीजनत्।। १ ।।

आतङ्कवादिभिर्दुष्टैर्दुष्टः पन्थाः समाश्रितः।
रम्यः कश्मीरदेशो यद्वशात्कष्टश्रितो[1]ऽधुना।। २ ।।

हन्त्येते पुरुषान् क्रूरा युवतीर्दूषयन्ति च।
गृहेषु च ददत्यग्निं परवाक्यप्रचोदिताः।। ३ ।।

स्वेनैव नाशं स्वानां[2]ते कुर्वते मूढचेतनाः।
देशस्य यत्समग्रस्य दुःखायैवोपकल्पते।। ४ ।।

अहो बत महत्कष्टं सोढं कश्मीरवासिभिः।
विलापयेद्यदश्मानमद्रिं चापि विदारयेत्।। ५ ।।

शान्तिः प्रवर्ततां भूयो हिंसा चापि निवर्तताम्।
इत्येव प्रार्थ्यते नित्यं शङ्करो लोकशङ्करः।। ६ ।।

**भवत्संविभक्तवेदनः**
**सत्यव्रतः शास्त्री**

---

१. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२.१.२४) इत्यनेन तत्पुरुषसमासः।
२. स्वमज्ञातिधनाख्यायाम् (१.१.३५) इत्यनेन ज्ञातिवर्जितेऽर्थे स्वस्य सर्वनामता। अत्र पुनर्ज्ञातिरर्थः। स्वानां=बन्धूनाम्।

२६.१२.१९९६ दिनाङ्के पाटलिपुत्रस्थान् श्रीरामनारायणपाण्डेयमहोदयान्
प्रति प्रेषितं पत्रम्

मान्याः,

सादरं प्रणतिततयः।

(अनुष्टुब्वृत्तम्)

आसाद्य भवतां पत्रं मधुरं मधुराक्षरम्।
अमन्दानन्दसन्दोहमन्वविन्दमहं बुधाः!।। १।।

भवन्तो मां स्मरन्तीति परा मे कृतकृत्यता।
बद्धोऽहं दूरदेशस्थो भवद्भिः स्नेहतन्तुभिः।। २।।

गच्छन्तु दृढतां भूयस्त इमे स्नेहतन्तवः।
पार्वतीपतिमित्येषा सश्रद्धं प्रार्थना मम।। ३।।

आस्त पद्यमयं पत्रं यन्मया प्रेषितं पुरा।
अधुना हन्त! नास्त्येव तस्य प्रतिलिपिर्मयि।। ४।।

नवीनवर्षप्रारम्भो दिनैः कतिपयैर्भवेत्।
प्रेष्यन्ते तत्कृते नैका भवद्भ्यः शुभकामनाः।। ५।।

निरन्तरं समेधन्तां भवन्तः सकुटुम्बकाः।
विततां विमलां चापि लभन्तां कीर्तिमुत्तमाम्।। ६।।

इति प्रार्थना
भवद्गुणगणावर्जितहृदयस्य
सत्यव्रतस्य

## २०.१.१९९८ दिनाङ्के नलेटी ( कांगड़ा ) स्थ श्रीदुर्गादत्तशास्त्रिणः प्रति प्रेषितं पत्रम्

**मान्येभ्यो नमो नमः**

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
प्रावाहयन्नमन्दाया हृदि धारां मुदो मम।। १।।

वर्षमेतद्भवेन्नूत्नं कृतेऽपि भवतां शुभम्।
इत्येषा प्रार्थना मेऽस्ति प्रभोः पादारविन्दयोः।। २।।

प्रणीयते भवद्भिः को ग्रन्थः सम्प्रति नूतनः।
इत्येतज्ज्ञातुमिच्छामि तद्रसास्वादलोलुपः।। २।।

भवादृशो जनः सत्यं नहि तिष्ठेदकर्मकृत्।
क्षणमपीति विश्वासो मम चित्ते व्यवस्थितः।। ३।।

अत एव मया प्रश्नः पूर्वपद्ये कृतो बुधाः!
कृतीनां रचनायां स्युर्व्यापृताः कृतिनः सदा।। ४।।

त्र्यूनसप्ततिवर्षोऽहं तत्तत्कर्मरतो मुदा।
कृशः सन्नपि कायेन कालं स्वं क्षपयाम्यहम्।। ५।।

भवन्निष्ठः
सत्यव्रतः

२०.१.१९९८ दिनाङ्के पाटलिपुत्रस्थान् आचार्यचन्द्रदीपशुक्लमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या आचार्यवर्याः!

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
हर्षप्रकर्षवर्षं मे चित्तेऽकुर्वन् निरन्तरम्।।१।।

नववर्षमिदं भूयात् शुभाय भवतामपि।
इत्येतत्प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।।२।।

सुरसरस्वतीसमाराधनैकव्रतः
सत्यव्रतः शास्त्री

२०.१.१९९८ दिनाङ्के रायबरेलीस्थ डा० प्रशस्यमित्रशास्त्रिण: प्रति प्रेषितं पत्रम्

प्रिया: शास्त्रिवर्या:,
सस्नेहं प्रणतय:।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
व्यतन्वन्मम हृद्देशे मुदं वाचामगोचराम्।।१।।

भवन्तोऽपि नवे वर्षे मोदमाना: स्वके दमे।[1]
लभन्तां विमलां कीर्तिमित्येषा कामना मम।।२।।

मुद्रितं चेद्भवत्काव्यं प्रेष्यं तत्प्रतिरूपकम्।
इत्येवोक्त्वा समासेन गिरं स्वामुपसंहरे।।३।।

भवन्मङ्गलान्यभिलाषुकोऽहं[2]
सत्यव्रत: शास्त्री

---

१. अत्र 'मोदमानौ स्वे दमे' इति श्रुतिवाक्यच्छाया।
२. न लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीनिषेधे द्वितीयाप्रयोग:।

२१.१.१९९८ दिने मीदीपुरस्थ स्वामी सर्वानन्दसरस्वतीमहाभागान्
प्रति प्रेषितं पत्रम्

मान्याः स्वामिपादाः,

सश्रद्धं निवेद्यन्तेऽत्रभवत्सु प्रणामाञ्जलयः।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
अगृह्यन्त मया मोदादाशिषां राशयो यथा।।१।।

भवतां दर्शनं जातं यन्मोदीपुरसंज्ञके।
पुरे प्रत्येमि तत्पूर्वपुण्यानामेव मे फलम्।।२।।

तपःपूता महात्मानो महसां राशयो मताः।
तत्साक्षात्कारमात्रेण दूरेणापैति कल्मषम्।।३।।

सत्यव्रताः सत्यसन्धाः सत्याय मितभाषिणः।
परं सत्यमुपासीना विरला जगतीतले।।४।।

तेषामेव सतां नित्यं विरलानां महात्मनाम्।
आशिषां सत्प्रभावेण समस्तं वर्तते जगत्।।५।।

ता एव भगवन्नित्यमाशिषोऽभिभता मम।
मदीया साधना याभिः प्रवर्तेत निरन्तरम्।।६।।

(उपजातिवृत्तम्)

कार्यं मया कार्यमिहास्ति भूरि
शरीरसादश्च ममास्ति भूयान्।
निमेषवद्यान्ति दिनानि चैव
रोगाश्च दैत्या इव मां स्पृशन्ति।।७।।

तथाऽपि सङ्कल्पवशात्प्रवृत्तः
कठोरसारस्वतसाधनायाम्।
तरिं समास्थाय शुभाशिषां वः
सिद्धिं लभेयेति विचिन्तयामि।।८।।

(अनुष्टुब्वृत्तम्)

इत्येव विनिवेद्याहं भवत्पादारविन्दयोः।
कृत्वा प्रणामपर्यायं गिरं स्वामुपसंहरे।।९।।

विनीतः
सत्यव्रतः शास्त्री

१३.२.१९९८ दिनाङ्के नलेटी ( कांगड़ा ) स्थ श्रीदुर्गादत्तशास्त्रिणः
प्रति प्रेषितं पत्रम्

मान्या विद्वद्वर्याः,
सस्नेहं प्रणतयः।

(अनुष्टुब्वृत्तम्)

अद्यैव भवतां प्राप्तं पत्रमानन्दवर्धनम्।
ज्ञपयामि तदर्थेऽहं परमां स्वकृतज्ञताम्।।१।।

संस्कृतकाव्यकुञ्जस्य मदीयात्रानुपस्थितौ।
जाता प्राप्तिरतो हेतोर्नासुसूचं ततो हि ताम्।।२।।

(उपजातिवृत्तम्)

आमूलचूलं परिशीलितं तत्
काव्यं मयाऽऽस्वादितमेव चापि।
भवत्प्रसूतो रसगर्भरम्यो
गुम्फो गिरां मोदभरं तनोति।।३।।

न सन्ति मन्ये बहवोऽत्र लोके
प्रौढिर्भवेद्यत्कृतिषु प्रभूता।
हृद्यानवद्यानि भवत्कृतानि
पद्यानि सत्यं हृदयं स्पृशन्ति।।४।।

इति समासेनैव स्वं वच उपन्यस्यति

भवद्गुणगणावर्जितहृदयो भवद्भ्राता
सत्यव्रतः

२८.३.१९९८ दिनाङ्के पुण्यपत्तनस्थगजानन बालकृष्ण पलसुले महाभागान् प्रति प्रेषितं पत्रम्

मान्या भ्रातृवर्या,
जयतु भारती

(मालिनीवृत्तम्)

कतिपयदिनपूर्वं संनिवृत्तो विदेशात्
. प्रणयभरभरार्द्रं पत्रमासीषदं वः।
अमृतरससमानं स्वादिमानं दधानम्
अतुलितपरितोषं मानसे मे यदाधात्।। १।।

विरचितमतिहृद्यं काव्यरत्नं भवद्भि-
र्विविधरससुपुष्टं भाति वैनायकाख्यम्।
सुललितपदशय्यं यन्निपाठं निपाठं[१]
न भवति परितृप्तिः पण्डितानां जनानाम्।। २।।

अगमदिदमतीते मासि पुण्ये प्रसिद्धिं
विविधविबुधजुष्टे पत्तने पुण्यनाम्नि।
सुखकरमिति वृत्तं पत्रतो वो विदित्वा
नयनविषयमेतन्नेतुमिच्छामि तूर्णम्।। ३।।

(अनुष्टुब्वृत्तम्)

प्रार्थयेऽहं ततो विज्ञाः प्रहेतुमचिरेण तत्।
अप्रैलमासमध्ये मे स्थितिर्दिल्ल्यां भवेद्यतः।। ४।।

---

१. आभीक्ष्ण्ये णमुल् च (३.४.२२) इति णमुल्।

अत आश्रित्य सङ्केतं तत्स्थं प्रेष्यं सुधीवरैः।
यथाशक्ति यथाशीघ्रं काव्यस्य प्रतिरूपकम्।।५।।

इति विनिवेदना
भवदभिन्नहृदयस्य
सत्यव्रतस्य

**५.४.१९९८ दिनाङ्के मुम्बापुरीस्थ डा० कला आचार्यमहाभागाः प्रति तदीय-सुताशुतोषविवाहोत्सवावसरे प्रेषितं पत्रम्**

**मान्या डा० आचार्य महाभागाः,**

**सस्नेहं प्रणतयः।**

(अनुष्टुब्वृत्तम्)

आचार्यकुलदीपस्याशुतोषस्य विपश्चितः।
अन्येद्युः प्राप्य रुचिरं विवाहस्य निमन्त्रणम्।। १ ।।

हर्षवर्षप्रकर्षो हि न माति हृदये मम।
बान्धवानां मुदे यूनो द्वितीयाश्रमसङ्क्रमः।। २ ।।

माधुर्या सङ्गतः सोऽयं माधुर्यं जीवने दधत्।
सह पुत्रैश्च पौत्रैश्च मोमुदीतु स्वके दमे।। ३ ।।

शुश्रूषमाणः[1] पितरौ ज्येष्ठांश्चान्यान् कुटुम्बके।
भूयिष्ठं दक्षिणः श्रीमान् स्वके परिजने तथा।। ४ ।।

उद्युक्तः सततं राष्ट्रहिताय स्वहिताय च।
आयुरारोग्यमैश्वर्यं लभतां जगतीतले।। ५ ।।

इत्याशीः

**सत्यव्रतशास्त्रिणः**

---

१. ज्ञाश्रुस्मृदृशां सनः (१.३.५७) [illegible]नेनात्मनेपदं श्रुधातोः सनि।

५.४.१९९८ दिनाङ्के अहमदाबादनगरस्य डा० हर्षदेवमाधवमहाभागान्
प्रति प्रेषितं पत्रम्

प्रिया माधवमहाभागाः,
सस्नेहाशिषः।

(मालिनीवृत्तम्)

कतिपयदिनपूर्वं संनिवृत्तो विदेशान्
नयनसुखकरं मे पत्रमासीषदं वः।
उपहृतमतिरम्यं तेन सत्रैव चापि
नवरसपरिपुष्टं काव्यरत्नं भवद्भिः।।१।।

अभिनवपरिपाटी याऽऽश्रिता काव्यरत्ने
सहृदयजनवृन्दं सा ऽतिमुग्धं करोति।
अविरलरसधारां सा सुधास्वादतुल्यां
सृजति मनसि तृप्ते तस्य सम्यक् प्रबुद्धे।।२।।

(अनुष्टुब्वृत्तम्)

निष्क्रान्ताः सर्व इत्याख्यः श्रीमतां काव्यसङ्ग्रहः।
सांस्कृते वाङ्मये सत्यं प्रयोगोऽभिनवो ननु।।३।।

नूत्नप्रयोगरम्याभिर्नवाभिः कृतिभिः सदा।
समेधयन्तः साहित्यं भवन्तः सुखमाप्नुयुः।।४।।

इत्याशीः
सत्यव्रतशास्त्रिणः

नलेटी ( कांगड़ा ) स्थ

श्रीदुर्गादत्तशास्त्रिणः प्रति ६.१.१९९९ दिनाङ्के प्रेषितं पत्रम्

मान्या महाकवयः,

सप्रश्रयं नतिततयः।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
अगृह्यन्त मया सत्यमाशिषां राशयो यथा।।१।।

विदुषां शास्त्रविज्ञानां वाचः प्रस्फुरिताः स्वयम्।
सत्यमर्थानुधाविन्य इति नास्त्यत्र संशयः।।२।।

ज्ञानेन वयसा चैव ज्येष्ठाः प्रेष्ठाश्च मे मताः।
विद्वद्गोष्ठीगरिष्ठाश्च भवन्तो बुधसत्तमाः।।३।।

भवतां स्मरणेनैव भवेत्पुण्योदयो महान्।
किं पुनः पत्रलाभेन स्नेहगङ्गाप्रवाहिणा।।४।।

जनोऽयं हृदि कर्तव्यः सदैवेत्यर्थये बुधाः!
भवत्पादानुरक्तस्य तेन स्यान्मे कृतार्थता।।५।।

इत्येवोक्त्वा विरमाम्यहं

भवदाश्रवः

सत्यव्रतः शास्त्री

## दिल्लीस्थ डा० तीर्थराजत्रिपाठिनं प्रति ६.१.१९९९ दिनाङ्के प्रेषितं पत्रम्

**प्रिया बन्धुवर्याः,**

सस्नेहं नमस्कृतयः।

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिताः प्रियाः।
अकुर्वन् निर्वृतिं चित्ते भवन्तो हि प्रिया मम।। १।।

अतीते हायने जूनमासान्ते सहभार्यकः।[1]
बैंकाकनगरात्प्राप्तः प्रियां दिल्लीं पुरीमहम्।। २।।

बैंकाकनगरे पत्नी मम कार्यरताऽभवत्।
अतो मया तया सार्धमभूद्वस्तव्यमेव हि।। ३।।

तस्याः कार्ये गते तत्र समाप्तिं तयका सह।
न्यवृतं[2] निर्वृतस्वान्तः स्वकीयं देशसत्तमम्।। ४।।

उषित्वा बहु देशेषु निवृत्तः साम्प्रतं सुखी।
काव्यशास्त्रविनोदेन स्वं कालं गमयाम्यहम्।। ५।।

भवन्तोऽमेरिकादेशं गता, अध्युष्य तं पुनः।
वर्षमेकं समायाताः स्वं देशं भारतं प्रियम्।। ६।।

एतद् वृत्तं विदित्वाऽहं मोमुदीमि यतो भवेत्।
पुनरप्यावयोः सौख्यप्रदो दिल्ल्यां समागमः।। ७।।

सर्वेभ्यः कुटुम्बिभ्यो ममाशिषः सत्यव्रतस्य।।

---

१. उरःप्रभृतिभ्यः कप् (५.४.१५) इत्यनेन समासान्तः कप्।

२. द्युद्भ्यो लुङि (१.३.९१) इतिसूत्रेण विकल्पेन परस्मैपदे पुषादिद्युताद्य्लृदितः परस्मैपदेषु (३.१.५५) इत्यनेन लुङि च्लेरङ्।

१५.१.१९९९ दिनाङ्के एडमण्टन (कनाडा) स्थ श्रीहरिपालसिंहरावमहोदयान् प्रति प्रेषितं पत्रम्

मान्या भ्रातृवर्याः,
सप्रश्रयं प्रणमामि।

(अनुष्टुब्वृत्तम्)

पत्रं दिनद्वयात्पूर्वं सम्प्राप्य भवतां शुभम्।
अमन्दानन्दसन्दोहसन्तानं समवाप्नवम्।।१।।

भवतां कुशलोदन्तो दूरादधिगतो मया।
प्रवाहयति पत्रेण रसधारां ममात्मनि।।२।।

सिंहेन सुखदेवेन नागराकुलजेन हि।
सम्पर्कः साधितोऽभून्नो साफल्यं तत्र मेऽभवत्।।३।।

गतोऽभूत्स जनः खन्नां तत्पत्नी तदभाषत।
संलापोऽभूत्तया सार्धं पत्न्या मम सुखावहः।।४।।

अस्मिन्वर्षे स्वकं देशमायियासन्ति बन्धवः।
मासे नवाम्बरे वृत्तमिति हर्षं तनोति मे।।५।।

स्नेहातिरेकाद् भवतः प्रतीक्षायां रतौ ध्रुवम्।
स्थास्याव आवां तृषितौ चातकाविव पक्षिणौ।।६।।

जीविष्यावो यदीत्येतद्वचनं न सुखावहम्।
भवत्पत्रगतं नूनं विषादं समजीजनत्।।७।।

भवतां दीर्घमायुः स्यादित्येतत्प्रार्थये प्रभुम्।
आप्नुवन्तु भवन्तो मे भ्रातरः पुरुषायुषम्।।८।।

भ्रातृव्येन समं नैव वार्तालापोऽभवन्मम।
कृतेऽपि यत्ने बहुशः स्थितिरत्रेदृशी खलु।।९।।

न दूरध्वनियन्त्राणि ग्रामेषु नगरेषु च।
ध्वनिप्रापणशक्तानि तेन नो दूयते मनः।।१०।।

विमानपत्तनादेव दिल्लीं प्राप्तेन सौख्यदा।
भ्रातृव्येन कृता वार्ता भवतां भ्रातृजायया।।११।।

अहं तस्मिन्दिने नासं गृहे तस्मान्मया सह।
वार्तालापोऽभवन्नैव मया सह सुखावहः।।१२।।

विषयान्तरमालम्ब्य वक्तुं किञ्चिदुपक्रमे।
साम्प्रतं यद्भवच्चित्ते प्रहर्षं जनयेद् ध्रुवम्।।१३।।

गणतन्त्रदिने पुण्ये पद्मश्रीरित्युपाधिना।
आस्माहं भारतीयेन शासनेन सुसत्कृतः।।१४।।

तत्पश्चान्मार्चमासस्य दिवसे नवमेऽभवम्।
अलङ्कृतो महामहोपाध्यायेति पदेन च।।५।।

स्थितेन श्रीपतिक्षेत्रे विद्यापीठेन सादरम्।
उपस्थितौ बुधाग्राणां शतशः सुरवाग्जुषाम्।।१५।।

आशासे सर्वथा सन्ति भवन्तः सकुटुम्बकाः।
हृष्टाः पुष्टाः सुतुष्टाश्च कृपया परमेष्ठिनः।।१६।।

भवद्भ्राता
सत्यव्रतः

**नलेटी ( कांगड़ा )स्थ श्रीदुर्गादत्तशास्त्रिणः प्रति १९.४.१९९९ दिनाङ्के प्रेषितं पत्रम्**

**मान्या महाकवयः,**

**सप्रश्रयं प्रणतिततयः।**

(अनुष्टुब्वृत्तम्)

पत्रं भावत्कमासाद्य प्रहर्षः परमो मम।
वरतुल्या असन्देहं मत्कृते भवदाशिषः।।१।।

पद्मश्रीरिति सम्मानप्राप्तौ ता एव हेतवः।
नान्यन्मे वाञ्छनीयं स्यादृते तासामसंशयम्।।२।।

आत्मानं कृतिनं मन्ये स्निह्यन्ति मयि यज्जनाः।
भवादृक्षा गुणौघस्य निधयो लोकपूजिताः।।३।।

प्रयतेऽहं प्रचाराय संस्कृतस्य दिवानिशम्।
मत्कृते हि तदेवास्ति कर्मेप्सिततमं मतम्।।४।।

स्मर्तव्योऽयञ्जनः काले काल इत्येव मेऽर्थना।
स्वीकरिष्यन्ति तां सन्त इत्यस्ति प्रत्ययो मम।।५।।

भवतां सकुटुम्बानां मङ्गलं प्रार्थ्य शङ्करम्।
शङ्करं प्राञ्जलिः प्रह्वो वाचं स्वामुपसंहरे।।६।।

भवदाश्रवोऽहं
**सत्यव्रतः शास्त्री**

डा० मिथिलेशकुमारीं पाटलिपुत्रस्थां प्रति तत्कृतिं चन्द्रचरितम् अभिलक्ष्य
२.७.१९९९ दिनाङ्के प्रेषितानि शुभाशंसापद्यानि

(अनुष्टुब्वृत्तम्)

गाथा सुभाषचन्द्रस्य स्फूर्तिदा प्रथिता भुवि।
गीता गीर्वाणभारत्या चन्द्रचरितसंज्ञया।।१।।

मिथिलेशकुमार्याऽत्र कवयित्रिवरेण्यया।
मनोहरपदन्यासा कल्पेत प्रीतये सताम्।।२।।

इति नास्त्येव संशीतिलवोऽपि मम मानसे।
"नहि कस्तूरिकामोदः शपथेन विभाव्यते"।।३।।

सुभाषचरितं गीतं कवयित्र्या सुभाषया।
तदर्थं धन्यवादार्हा सेति मे सुदृढा मतिः।।४।।

(उपजातिवृत्तम्)

सदाशयानां चरितानुकीर्तनात्
सदा सदानन्दभरो विभाति।
ज्ञानं च तत् पुण्यभरं सुखं च
तनोति कीर्तिं भुवि चाप्यनन्ताम्।।५।।

देशं स्वकीयं परतन्त्रतायाः
पाशात्कृतं मोचयितुं प्रयत्नम्।
सुभाषचन्द्रेण महाजनेन
न विस्मरिष्यन्ति जनाः कदाचित्।।६।।

देशं स्वतन्त्रं स्वबलेन कर्तुं
स्वातन्त्र्यसेनाघटनं चकार।

यो दीर्घदर्शी तमुपायविज्ञं
सुभाषचन्द्रं वयमानताः स्मः।।७।।

नेतेति लोके व्यपदिष्ट इष्टो
यो देशनेतृत्वमलञ्चकार।
विचक्षणानां धुरि कीर्तितः स
काव्यस्य नेताऽस्य विलक्षणस्य।।८।।

आहिण्डमानो विविधान् प्रदेशान्
स भारतीयाभिजनान् प्रचोद्य।
संयोजयामास निजस्य देश-
स्योद्धारकृत्याय महामनस्वी।।९।।

स्फूर्तिप्रदास्तन्निशमय्य वाचो
देशान्तरे भारतदेशजाताः।
स्वमार्पिपन् स्वं सकलं स्वदेश-
भक्तिप्रणुन्नाः परमप्रसादात्।।१०।।

स्वातन्त्र्यसङ्ग्रामनिबद्धबुद्धि-
र्वैदेशिकानां कुटिलप्रवृत्त्या।
स पञ्जरस्थो विनतातनूज
इवात्मदेहं विससर्ज हन्त!।।११।।

तं नेतृवर्यं विषयं विधाय
काव्यं निबद्धं मिथिलेशदेव्या।
वैदर्भरीत्या रमयेदवश्यं
मनोऽभिरामं सुमनोमनांसि।।१२।।

वाचोऽदसीया रसभावमिश्रा
अलङ्कृतिश्रीःसमलङ्कृताश्च।

स्फुटार्थतत्त्वाः सरलाः सुबोधा
मुग्धान् विदध्युः सकलान् विदग्धान्।। १३।।

यशोऽतिशुभ्रं तनुतादभ्रं
काव्योत्तमं काव्यमिदं मनोज्ञम्।
अस्या इति प्रार्थ्य विभुं महेशम्
अहं गिरं स्वामुपसंहरामि।। १४।।

२९.९.१९९८ दिनाङ्के एडमण्टन (कनाडा) स्थान् श्रीहरिपालसिंहरावमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या भ्रातृवर्याः,
सादरं वन्दे।

(अनुष्टुब्वृत्तम्)

अपरेद्युः समासाद्य पत्रं वः स्नेहसंयुतम्।
जातोऽहं चिरकालेन मोदनिर्भरमानसः।। १।।

बन्धूनां कुशलोदन्तश्चिरेणाधिगतो ध्रुवम्।
किञ्चिदूनो भवेद् धृद्यात्सङ्गमादिति सूरयः।। २।।

पुत्रैश्च नप्तृभिश्चापि क्रीडन्तः परया मुदा।
सन्तो नयन्ति कालं स्वं ज्ञात्वेति सुखितोऽस्म्यहम्।। ३।।

अहमप्यत्र कार्येषु कार्येषु व्यापृतो भृशम्।
कालात्ययमजानानो जीवितं गमये सुखम्।।४।।

नैके ग्रन्था मयाऽभूवन्नारब्धाश्चिरकालतः।
निबन्द्धुं तत्समाप्त्यै हि बद्धः परिकरो मया।।५।।

वयसा चापि वर्षीयाञ् शरीरेण कृशस्तथा।
न जाने मे भवेदायुः कति वर्षाणि कोविदाः!।। ६।।

अतः समाप्यास्ते ग्रन्था कालेनैव मयेत्यहम्।
निबन्धनायां सक्तोऽहं तेषां श्रान्तो दिवानिशम्।।७।।

वीरेन्द्रो जायया साकं प्रियः पुत्रः समेष्यति।
दिल्लीं नवाम्बरे मासि ज्ञात्वेदं मे परं सुखम्।।८।।

आनेष्यामि सभार्यं तं गृहं स्वं व्योमपत्तनात्।
यात्राकार्यक्रमस्तेन तस्य सूच्यो यथाविधि।।९।।

आशासे भ्रातृजाया मे स्वस्था हृष्टा च वर्तते।
तस्यै प्रणामपर्यायो निवेद्यो मे समादरात्।।१०।।

आशिषां राशिभिश्चापि वर्धनीयाः प्रिया मम।
पुत्राः पौत्रास्तथा चान्ये बान्धवाः सुहृदस्तथा।।११।।

इत्येवोक्त्वा समासेन शुभध्यानपरः सदा।
भवतां सकुटुम्बानां स्वां वाचमुपसंहरे।।१२।।

विनीतः
सत्यव्रतः

### ३१.१०.१९९९ दिनाङ्के आफ्तरदिंगन ( शर्मण्यदेश ) स्थ श्रीअलोइस पायरमहाभागान् प्रति प्रेषितं पत्रम्

**प्रियाः पायरमहाभागाः**
**स्वस्ति तत्रभवद्भ्याम्।**

(अनुष्टुब्वृत्तम्)

व्यतीता बहवो मासाः पत्रं प्राप्तवतो मम।
नहि लब्धो मया कालः प्रहेतुं च तदुत्तरम्।। १।।

इति दुःखाकरोत्येव मम चेतो निरन्तरम्।
भवांश्च मार्गरीटा च मम हृदि सदा स्थितौ।। २।।

कामये सर्वदैवाहं युवयोर्मङ्गलं शुभम्।
सदा हृष्टौ सदा पुष्टौ स्यातां तुष्टौ सदा युवाम्।। ३।।

अहमप्यत्र सन्तुष्टः स्वाध्यायनिरतोऽनिशम्।
यापयामि स्वकं कालं प्रभुध्यानपरायणः।। ४।।

एकोनत्रिंशे दिवसे मासि सप्ताम्बरे मम।
हायने सप्ततितमे प्रवेशः समजायत।। ५।।

वर्षीयानस्मि सञ्जातः तथाप्यध्ययने रतः।
सर्वथा स्वस्थचित्तोऽहं कार्यौघे व्याप्रियेऽनिशम्।। ६।।

कुर्वन्नेवेह कर्माणि जनो लोके जिजीविषेत्।
इति श्रुतिवचो मेऽस्ति प्रमाणं परमं मतम्।। ७।।

स्निग्धाया मार्गरीटाया संस्कृताज्ञानहेतुतः।
सुखावबोधं संलक्ष्य वाणीमाङ्ग्लीं समाश्रये।। ९।।

शुभेच्छुः
सत्यव्रतः

### १४.११.१९९९ दिनाङ्के नागपुरस्थ डा० श्रीधरभास्करवर्णेकरमहाभागान् प्रति प्रेषितं पत्रम्

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसा भवद्भिः प्रेषिता मयि।
अमन्दानन्दसन्दोहं मम चेतस्यजीजनन्।। १।।

ज्ञानवृद्धा वयोवृद्धाः कविगोष्ठीविभूषणाः।
आदर्शभूता लोकेऽस्मिन् वैदुष्यस्यार्जवस्य च।। २।।

भवन्तः सुखमेधन्तां सकुटुम्बाः शतं समाः।
इत्येव प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।। ३।।

भवदभिन्नहृदयः
सत्यव्रतः

**९.१२.१९९९ दिनाङ्के जयपुरस्थाञ्श्रीनारायणशास्त्रिकाङ्करमहाभागान्**
**प्रति प्रेषितं पत्रम्**

**मान्याः,**
**सप्रश्रयं नतिततयः।**

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य स्नेहपूरेण पूरितम्।
आनन्दस्य परां कोटिं गतोऽहं वागगोचराम्।।१।।

विश्वविद्यालयीयेन कार्येणैकेन सम्भवेत्।
पुरे जयपुरे रम्ये मदीयागमनं बुधाः!।।२।।

तदा द्रष्टास्मि भवतः पुण्यश्लोकानसंशयम्।
विदुषां दर्शनं पुण्यं पुण्यैरेव हि लभ्यते।।३।।

शरीरकष्टं यत्सोढं भवद्भिस्तन्ममातनोत्।
मनःकष्टं, भवेत्कष्टं कष्टायेष्टजनार्तिदम्।।४।।

अल्पीयसैव कालेन स्वास्थ्यलाभो भवेत्सताम्।
इति सम्प्रार्थ्य भूतेशं वाचं स्वामुपसंहरे।।५।।

**भवदभिन्नहृदयः**
**सत्यव्रतः शास्त्री**

२१.१.२००० दिनाङ्के दरभङ्गास्थान् डा० जयमन्तमिश्रमहाभागान्
प्रति प्रेषितं पत्रम्

मान्याः सादरं प्रणतयः

(अनुष्टुब्वृत्तम्)

प्रत्यावृत्तः परह्योऽहं विदेशात्पत्रमाप्नवम्।
भवतां स्नेहसंयुक्तं यददान्मे मुदं पराम्।। १।।

सप्ताहपञ्चकेऽतीते गमिकर्मीकृता मया।
आग्नेयदिग्विभागस्था नाना देशा विलक्षणाः।। २।।

युगाब्दो नूतनो भूयान्नवः संवत्सरस्तथा।
शुभो हर्षप्रदश्चेति प्रार्थये पार्वतीपतिम्।। ३।।

भवदभिन्नहृदयः
सत्यव्रतः

**२१.२.२००० दिनाङ्के आचार्य चन्द्रदीपशुक्लमहाभागान् पाटलिपुत्रस्थान्**
**प्रति प्रेषितं पत्रम्**

**मान्याः, सादरं प्रणतयः।**

(उपजातिवृत्तम्)

अवाप्य पत्रं भवतां नवाब्द-
प्रारम्भकाले शुभकामनार्थम्।
अविन्दमानन्दमहं प्रकृष्टं
गिरामगम्यं भवतः प्रसादात्।। १।।

दिशाम्बरे मास्यगमं सुरम्यान्
देशानकेनान् दिशि दक्षिणस्याम्।
यतो न्यवर्तिष्यपरेद्युरेव
स्वमातृभूमिं जननीमिव स्वाम्।। २।।

हेतोरतोऽजायत मे विलम्बः
पत्रोत्तरे, येन न मे प्रसक्तिः।
अवश्यकार्येषु न कार्य एव
नृणा विलम्बो हितकामुकेन।। ३।।

सिद्धान्त एषोऽस्ति सदा मदीय-
स्तथापि तत्पालनमस्ति नैव।
सम्भाव्यकोटाविति सम्प्रधार्य
क्षमापयामि स्वमहं भवद्भ्यः।। ४।।

**विदुषामाश्रवः**
**सत्यव्रतः शास्त्री**

१७.२.२००० दिनाङ्के साम्बलपुरस्थान् डा० सदाशिवप्रहराजमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या विद्वद्वरेण्याः,
सादरं प्रणतयः।

(अनुष्टुब्वृत्तम्)

पत्रमासीषदं स्निग्धं भवतां यत्परां मुदम्।
अदाद्वर्णयितुं शक्या या गिरा न कथञ्चन।।१।।

अकिञ्चने मयि स्नेहो भवतां विदितो मम।
तेनाहं सम्प्रसीदामि धन्यं स्वं कलयामि च।।२।।

उत्कलावासकाले मे सञ्जातश्चित्तहर्षदः।
भवद्भिः संस्तवो यस्य मधुरास्ति मम स्मृतिः।।३।।

अवश्यं प्रेषयिष्यामि प्रसन्नेनान्तरात्मना।
सम्मानार्थं भवन्नाम नातः प्रियतरं हि मे।।४।।

अप्रैलमासप्रारम्भे प्रस्तावामन्त्रणं भवेत्।
माध्यमेन प्रपत्रस्य तदवश्यं करिष्यते।।५।।

पुत्राः पुत्र्यश्च भवतां किङ्किङ्कार्यरता इति।
ज्ञातुमिच्छाम्यहं भद्रास्ते हि मे भ्रातृजा इति।।६।।

इत्येवोक्त्वा समासेन स्वं प्रणामं निवेद्य च।
भवद्गुणगणाकृष्टो वाचं स्वामुपसंहरे।।७।।

सत्यव्रतः शास्त्री

### १७.२.२००० दिनाङ्के शिमलास्थान् आचार्यकेशवशर्मणः प्रति प्रेषितं पत्रम्

**मान्या बन्धुवर्याः,**

**सस्नेहं प्रणतयः।**

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य स्नेहपूरेण पूरितम्।
अमन्दानन्दसन्दोहमन्वविन्दमहं ध्रुवम्।।१।।

अप्रैलमासप्रारम्भे भवत्यामन्त्रणं बुधाः।
प्रदेयो राष्ट्रपतिना संमानो वार्षिको हि यः।।२।।

तदर्थं भवतां नाम प्रस्तोष्यामीति निश्चितम्।
भवन्तो ह्यर्पितस्वान्ता गैर्वाण्युद्धारहेतवे।।३।।

धौरेया विदुषां लोके तदर्हाः सर्वथा खलु।
नानाकाव्यप्रणेतारः शास्त्राध्ययनचुञ्चवः।।४।।

सम्माननिर्णयस्यार्थे घटिता शासनेन या।
समितिर्विषये साऽस्मिन् प्रमाणं न तु मादृशाः।।५।।

**भवदभिन्नहृदयः**
**सत्यव्रतः**

४.९.२००० दिनाङ्के पण्डित शिवनारायणशास्त्र्यभिनन्दनग्रन्थोपलक्ष्ये प्रेषिता

## अभिनन्दनसप्तपर्णी

(आर्यावृत्तम्)

नानाशास्त्रनदीष्णः सूक्ष्मेक्षिकया विभूषितः शास्त्री।
शिवनारायणनामा जीव्यात्समाः शतं हृदा प्रमुदितेन।। १।।

(अनुष्टुब्वृत्तम्)

विद्याभ्यासेन येन स्वं जीवितं व्यतियापितम्।
ग्रन्था नैके प्रणीताश्च ये विद्वद्भिरभिष्टुताः।। २।।

यः पुत्रीयति शिष्यान् स्वान् स्नेहं तेषु च वर्षति।
स्वकस्य तेषु ज्ञानस्य सङ्क्रमं चाभिवाञ्छति।। ३।।

निर्वर्तयति कार्याणि कर्मयोगं य आश्रितः।
अनासक्तधिया स्वस्यां योगीव प्रकृतौ स्थितः।। ४।।

सुहृत्सु योऽनुरक्तोऽस्ति स्वधर्मं योऽभिरक्षति।
सदा स्वाध्यायनिरतस्तपस्वी वाग्विदां वरः।। ५।।

नित्यं परहिते रक्तः सक्तो ज्ञानार्जने तथा।
भक्तो भूताधिनाथस्यानुरक्तः सज्जनेषु च।। ६।।

(उपजातिवृत्तम्)

यशो भवेत्तस्य महाजनस्य
कुन्दावदातं विततं जगत्याम्।
स्वस्थः शरीरेण च चेतसा च
दीर्घं स आयुः सुखमश्नुवीत।। ७।।

इत्याशीः

सत्यव्रतशास्त्रिणः

२०.९.२००० दिनाङ्के खेकड़ास्थ डा० रामकिशोरमिश्रमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या महाकवयः,

जयतु भारती।

(अनुष्टुब्वृत्तम्)

आसाद्य भवतां पत्रं काव्यत्रयविभूषितम्।
सहितं च निबन्धेन गूढार्थप्रतिपादिना।। १।।

आरूढोऽहं परां कोटिं मुदो वाचामगोचराम्।
परस्परेण सम्बन्धः स्निग्धयोः प्रीतिदो भवेत्।। २।।

आराधना सरस्वत्या यावज्जीवं कृता मया।
तस्य प्रतिफलं नाम मयि स्नेहो भवादृशाम्।। ३।।

अयं स्नेहः समेधेत कलेवेन्दोर्दिने दिने।
इत्येव प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।। ४।।

भवदभिन्नहृदयः
सत्यव्रतः शास्त्री

जयपुरस्थेभ्यो डा० नारायण शास्त्रिकाङ्करमहाभागेभ्यः २२.९.२००० दिनाङ्के प्रेषितं पत्रम्

(उपजातिवृत्तम्)

नारायणेभ्यो विबुधाग्रगेभ्यो
महाकविभ्यः सुरवाक्प्रियेभ्यः।
सदा सदाचारपरायणेभ्यः
सुहृद्हृदानन्दविवर्धनेभ्यः।। १ ।।

सुश्लक्ष्णवाग्भूषणभूषितेभ्यः
सत्यव्रतो दिल्लिपुराधिवासी।
प्रणामपर्यायसमर्पणेन
श्रद्धां स्वकीयां प्रकटीकरोति।। २ ।।

स्नेहानुबन्धेन सुवर्णमुक्ता-
हारो भवद्भिर्मयि यो विसृष्टः।
स पूर्वजन्मार्जितपुण्यपाक-
रूपो ममेत्यत्र न संशयोऽस्ति।। ३ ।।

हस्तावचेयामितकीर्तिभाजां
भवादृशां स्नेहमभिप्रपन्नः।
सर्वात्मना स्वं कलयामि धन्यं
कुतोऽन्यथाऽसौ सुलभो भवेन्मे?।। ४ ।।

यथाऽन्तरङ्गे भवतां तथैव
ममापि चित्ते भवतां दिदृक्षा।

तां पूरयिष्यत्यचिरेण शम्भुः
सदा सदानन्दकरो दयालुः।।५।।

(अनुष्टुब्वृत्तम्)

इत्येवोक्त्वा समासेन भवद्गुणगणैर्हृतः।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।।६।।

**१.१०.२००० दिनाङ्के वृन्दावनस्थान् डा० मुरारिलालचतुर्वेदिमहोदयान् प्रति प्रेषितं पत्रम्**

**मान्या डा० चतुर्वेदिमहाभागा,**
जयतु भारती।

(अनुष्टुब्वृत्तम्)

अधिरूढः परां कोटिं मुदामहमसंशयम्।
पत्ररत्नं समासाद्य स्नेहसारेण संयुतम्।।१।।

पत्रे स्वकीये मधुरे निर्दिष्टा ये गुणा मम।
स्नेहप्रवृत्तिस्तत्रैवंदर्शिनीति मतिर्मम।।२।।

सोऽयं स्नेहोऽतिसुखदो वर्धतां सततं सताम्।
इत्येव प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।।३।।

भवदभिन्नहृदयः
सत्यव्रतशास्त्री

### १.१०.२००० दिनाङ्के वृन्दावनस्थान् डा० प्राणगोपालाचार्यमहाभागान् प्रति प्रेषितं पत्रम्

**मान्या आचार्यवर्या,**

जयतु भारती।

(अनुष्टुब्वृत्तम्)

परेद्यवि समासाद्य स्नेहधाराभिवर्षकम्।
पत्रं परः प्रमोदो मे मधुरं मधुराक्षरम्।।१।।

शारदाम्बा मया भक्त्या यावज्जीवमुपासिता।
तस्या एव प्रसादो ऽयं मयि स्निह्यन्ति यद्बुधाः।।२।।

शास्त्रानुशीलनं नाम परमं व्यसनं मम।
अनन्यमनसा तत्रात्मानं व्यापारयाम्यहम्।।३।।

नाना ग्रन्थप्रणयने व्यापृतो ऽहमहर्दिवम्।
समयं व्यतिगच्छन्तं नावबुध्ये कथञ्चन।।४।।

ते तेऽपूर्णा मम ग्रन्था पूर्णतां यान्तु सत्वरम्।
तदर्थमेव यत्नो मे सततं सम्प्रवर्तते।।५।।

सदा मङ्गलाभिलाषी
सत्यव्रतशास्त्री

**जयपुरस्थान् डा० गङ्गाधरभट्टमहाभागान् ३०.१०.२००० दिनाङ्के प्रेषितं पत्रम्**

**मान्याः,**
**प्रणतिततयः।**

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसाः स्नेहसिक्तेन चेतसा।
भवद्भिः प्रेषिता हृद्या मुदं मेऽजनयन् पराम्।। १।।

भवन्तो भ्रातृजायाभिः समेताः सुखिता भृशम्।
विन्दन्तु परमानन्दमित्येषा प्रार्थना मम।। २।।

भवद्गुणगणावर्जितहृदयस्य
**सत्यव्रतस्य शास्त्रिणः**

वृन्दावनस्थान् डा० रामकृपालत्रिपाठिनः १.११.२००० दिनाङ्के प्रेषितं पत्रम्

प्रिया डा० त्रिपाठिमहाभागा,
जयतु श्रीहरिः।

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य पद्यबद्धं मनोरमम्।
अनवद्यं च हृद्यं च प्रीतिर्मे परमा हृदि॥१॥

प्राचेतसेन मुनिना सत्योद्या[1] गीः प्रवर्तिता।
"अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्राऽपि दह्यते"॥२॥

अतिस्नेहः सतां सोऽयं ये पश्यन्ति गुणान्मयि।
आत्मानं कृतिनं मन्ये किं वा ऽन्यत्स्यान्मदीप्सितम्?॥३॥

वृन्दावने पुण्यतीर्थे निवसन्तः सदाशयाः।
भवन्तः सुखमेधन्तां सदानन्दविवर्धनाः॥४॥

आशिषं सम्प्रयुञ्ज्येमां भवत्स्नेहवशंवदः।
सत्यव्रतोऽहं दिल्लीस्थो वाचं स्वामुपसंहरे॥५॥

---

१. वदः सुपि क्यप् च (३.१.१०६) इत्यनेन क्यप्।

मुजफ़्फ़रनगरस्थान् डा० उमाकान्त शुक्लमहोदयान् १.११.२००० दिनाङ्के प्रेषितं पत्रम्

मान्याः,
सस्नेहं प्रणतयः।

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसा भवद्भिः प्रेषिता मयि।
धन्योऽस्मि कृतकृत्योऽस्मि कृतज्ञोऽस्मि तया बुधाः!।। १ ।।

आवासो नूतने स्थाने कल्पितो मयका यतः।
अतो दत्तोऽस्य सङ्केत उपरिष्टान्मया बुधाः।। २ ।।

तत्रावधेयं विद्वद्भिः प्रार्थ्यैतत्स्निग्धमानसः।
सत्यव्रतोऽहं दिल्लीस्थो वाचं स्वामुपसंहरे।। ३ ।।

सारस्वतसम्पादकान् पाटलिपुत्रस्थान् आचार्यचन्द्रदीपशुक्लमहाभागान्
प्रति १८.१.२००१ दिनाङ्के प्रेषितं पत्रम्

(अनुष्टुब्वृत्तम्)

सङ्केतपरिवर्तेन दिल्लीतः प्रेषितं पुनः।
भवत्पत्रं समासाद्य प्रहर्षः परमो मम।। १।।

शीतबाधापरीहारकामः सम्प्रत्यहं बुधाः!
मुम्बापुरीं[१] सपत्नीकोऽधिवसामि सुदूरगाम्।। २।।

फेब्रुवर्याख्यमासस्य दिवसे दशमे भवेत्।
प्रस्थानं मे पुनर्दिल्लीं कार्यं तत्रास्ति मे महत्।। ३।।

नूत्नवर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
वाचामगोचरां काञ्चिन्निर्वृतिं मे व्यधुर्हृदि।। ४।।

चिराय सङ्गमो नाभूदावयोरित्यसंशयम्।
चेतस्तदर्थमत्यन्तमुत्कण्ठाकुलितं मम।। ५।।

दिल्ल्यागमप्रसङ्गः स्याद्यदि केनापि हेतुना।
सनाथनीयाः श्रीमद्भिर्गृहा मे प्रार्थनेति मे।। ६।।

सदा कुशलिनः सन्तु सदा सन्तु निरामयाः।
भवन्त इति सम्प्रार्थ्य वाचं स्वामुपसंहरे।। ७।।

भवदाश्रवः
सत्यव्रत शास्त्री

---

१. उपान्वध्याङ्वसः (१.४.४८) इत्यनेन द्वितीया।

**२७.१.२००१ दिनाङ्के पाटलिपुत्रस्थान् सारस्वतसंस्कृतपत्रिकासम्पादकान् आचार्य चन्द्रदीपशुक्लमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्येभ्यः,**

**सस्नेहं प्रणतयः।**

(अनुष्टुब्वृत्तम्)

नववर्षशुभाशंसा भवद्भिः प्रेषिताः शुभाः।
अमृतद्रवकल्पा मे नवस्फूर्तिप्रदास्तथा।।१।।

नववर्षमिदं भूयात् कृतेऽपि भवतां शुभम्।
इत्येव प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।।२।।

अथावासो मया नूत्नो नवदिल्ल्यां प्रकल्पितः।
तत्सङ्केतो मया दत्त उपरिष्टात् सुधीवराः!।।३।।

तं सन्तो ध्यातुमर्हन्ति सदसद्व्यक्तिहेतवः।
उपयोज्यः स एव स्यादायताविति मेऽर्थना।।४।।

भवतां सकुटुम्बानां शिवतातिः शिवः शिवम्।
विदधात्विति सम्प्रार्थ्य वाचं स्वामुपसंहरे।।५।।

भवदाश्रवोऽहं
सत्यव्रतशास्त्री

## २७.१.२००१ दिनाङ्के डा० मोहनानन्दमिश्रमहाभागान् रावणेश्वरकानन-संस्कृतपत्रिकासम्पादकान् प्रति प्रेषितं पत्रम्

**मान्याः,**
**प्रणतिततयः।**

(अनुष्टुब्वृत्तम्)

नववर्षनवत्वस्य सर्वथा प्रतिपोषकम्।
नवीनां कल्पनां बिभ्रन्नवचिन्तनसंयुतम्।।१।।

हृद्यरूपं भवद्भावं मयि प्रकटयच्छुभम्।
भवत्पत्रं समासाद्य प्रमोदः परमो मम।।२।।

प्रवाहनित्यतां कालेऽङ्गीकुर्वन्ति मनीषिणः।
कथं नवत्वं तस्य स्यादजस्रपरिवाहिणः।।3।।
न प्रत्नत्वं न नूलत्वं तदारोपि भवेत्क्वचित्।
नित्यत्वे स्वीकृते तस्य कथं तत्परिकल्पना।।४।।

गृहा यदा परित्यक्ता मे रूपनगरस्थिताः।
आवासः कल्पितोऽन्यत्र नवदिल्ल्यां मया स्वकः।।५।।

भवदीयः
**सत्यव्रतशास्त्री**

**३१.१.२००१ दिनाङ्के पुण्यपत्तनस्थान् डा० गजाननबालकृष्णपलसुले महाभागान् प्रति प्रेषितं पत्रम्**

**प्रिया बन्धुवर्याः,**

**सप्रणयं प्रणतयः।**

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य प्रमोदः परमो मम।
दशमेऽह्नि प्रयातास्मि दिल्लीमिति सुनिश्चितम्।।१।।

तामहं प्राप्तमात्रश्च स्थितिं ज्ञात्वा यथार्थतः।
भवतः सूचयिष्यामि कल्पोऽयं प्रथमो मम।।२।।

दयाकृपादिशब्दा ये पर्याया इत्युदीरिताः।
सूक्ष्मोऽर्थभेदस्तत्रास्तीत्येषा बुद्धिर्दृढा मम।।३।।

यत्नेन महता सोऽर्थभेद उन्नेयतां व्रजेत्।
शिष्टप्रयोग एवात्र प्रमाणं परमं भवेत्।।४।।

प्रयोगो ऽन्वेषमन्वेषं विम्रष्टव्यो भवेन्ननु।
अन्यथा तु कथं वा स्यादर्थभेदविनिर्णयः।।५।।

प्रयोगजातेऽन्विष्टेऽपि नार्थभेदो मनागपि।
भवेत्प्रकट इत्येतन्नासम्भाव्यं कदाचन।।६।।

द्वित्रेषु वा प्रयोगेषु यदि स स्फुटतां व्रजेत्।
तथाऽपि स्युर्विम्रष्टव्याः प्रयोगाः शतशो ध्रुवम्।।७।।

सोऽयं प्रयत्नसम्भारो लट्वाकर्षणवद्भवेत्।
वंशस्तम्बात्सुमहत इति नास्त्येव संशयः।।८।।

तथाऽपि यत्नः कर्तव्य इति बुद्धिं समाश्रितः।
सिद्ध्यसिद्ध्योः समो भूत्वाऽऽत्मानं व्यापारयाम्यहम्।। ९ ।।

कालेजे दक्षिणे योऽयं कोशः सम्पाद्यते महान्।
सन्दर्शनिचयस्तत्र स्थितः साह्यं समाचरेत्।। १० ।।

इत्येदर्थमेवाहं कोशसन्दर्भसञ्चयम्।
दयादिशब्दसम्बद्धं द्रष्टुमिच्छामि तत्त्वतः।। ११ ।।

ततश्च ग्रन्थसम्भारं यस्मात्सन्दर्भसञ्चयः।
कदाचित्तद्विमर्शेन बुद्धिर्मे विमला भवेत्।। १२ ।।

विनियोगः स कालस्य सार्थकोऽपार्थकोऽथवा।
चिन्तयन्नपि बह्वत्र निर्णये नालमस्म्यहम्।। १३ ।।

शिष्टाः प्रमाणमत्रेति मतिं बध्नन् दृढामहम्।
उपसीदामि भवतो भवन्तः शिष्टसत्तमाः।। १४ ।।

पूर्वापरविमर्शोत्थं स्वं मतं सूचयन्तु माम्।
भवन्त इति सम्प्रार्थ्य वाचं स्वामुपसंहरे।। १५ ।।

भवदाश्रवः

सत्यव्रतशास्त्री

३१.१.२००१ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया डा० कृष्णलालमहाभागाः,
स्वस्ति सकुटुम्बेभ्यो भवद्भ्यः।

(उपजातिवृत्तम् इन्द्रवज्रावृत्तं च)

अतीतमासान्तिमवासरेषु
शीतप्रकोपे प्रबले प्रजाते
हस्तापचेयात्तुहिनाद्घनाच्च
दिगन्तरालेषु समावृतेषु।। १।।

हिम्येषु वातेषु वहत्सु तीव्रम्
अदृश्यमाने च सहस्त्ररश्मौ।
सर्वेषु जीवेषु यथाकथञ्चिच्
च्छ्वसत्सु वह्निं परितः स्थितेषु।। २।।

ऊर्णादिवासांस्यपि धारयित्वा
कम्पं शरीरेऽनुभवत्स्वजस्त्रम्।।
जाड्यादशान्तात्मसु शीतबाधा-
विलुप्तधैर्येष्वसुखस्थितेषु।। ३।।

कष्टं शरीरे ऽननुभूतपूर्वं
विभाव्य बाढं विमनायितात्मा।
उष्णप्रदेशे गमनाय सद्यः
सज्जोऽ भवं स्वं परिहाय वेश्म।। ४।।

मुम्बापुरी स्वस्य निवासहेतोः
शीतोष्णसाम्यान्मयकाऽश्रिताऽभूत्।

गृहेऽत्र कस्यापि सुहृद्वरस्य
वसामि तत्स्नेहपरिप्लुतात्मा।।५।।

स्वकृत्यजाते ऽभिरतो निकामं
शास्त्राणि सूक्ष्मं परिशीलयंश्च।
सरस्वतीपादसरोजसेवी
मुदा स्वकीयं समयं नयामि।।६।।

आत्मन्यहं तुष्टिभरं प्रपन्नः
प्रभुं प्रपन्नार्तिहरं प्रपन्नः।
वृत्तं प्रवृत्तं समया ऽखिलं मां[1]
न वेद्मि तत्राभिरुचेरभावात्।।७।।

अग्रे सरत्येव जगत् स्वगत्या
स्वभाव एवास्ति हि तादृशोऽस्य।
जङ्गम्यते ऽतो जगदित्युदारा
व्युत्पत्तिरेवार्थममुं व्यनक्ति।।८।।

न कोऽपि कर्तुं किमपीह शक्तो
न वा परावर्तयितुं हि किञ्चित्।
कालेन बद्धं दृढतन्तुनेदं
व्याधेन पक्षीव विरोरवीति।।९।।

कर्तुं न वा कर्तुमथान्यदेव
कर्तुं प्रभुः कोऽपि जनो जगत्याम्।
अहं प्रभुश्चेदभिमन्यते यो
वृथाभिमानी कृपणः स सत्यम्।।१०।।

वृथाभिमानं परिहाय शक्तेः
कालस्थितत्वं परिभाव्य सम्यक्।

१. अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति वार्तिकेन। समयायोगे मामित्यत्र द्वितीयाप्रयोगः

अनन्यभावेन जनेन लोके
प्रवर्तितव्यं निजकृत्यजाते।। ११ ।।

एवं कृते नैव भवेत्कदापि
खेदोऽन्तरङ्गे न च वा विषादः।
कर्तव्यबुद्ध्या जनयन्ति तोषं
कृतानि कार्याणि निरन्तराणि।। १२ ।।

तदन्यथात्वे मनसो महान् स्यात्
क्षोभो न वाचामपि गोचरो यः।
सर्वत्र लोके परिदृश्यमानो
वृत्तस्य भङ्गो रुजमातनोति।। १३ ।।

सन्तिष्ठते[1] कोऽपि गुरोर्न वाक्ये
ऽद्यत्वे तथाऽसत्सु च तिष्ठते[2] हा!
सर्वत्र लोको विपरीतभावं
समाश्रितो ऽस्तीति विचित्रमेतत्।। १४ ।।

स्वदेश एवास्ति नृपस्य पूजा
विद्वांस्तु सर्वत्र भवेत्सुपूज्यः।
निःसारतामेव गतेयमुक्ति-
रुपेक्षितत्वाद्विदुषो जनस्य।। १५ ।।

अधीतिनः शास्त्रचये[3] विपश्चि-
दुद्धाः[4] सदा ज्ञानचये निमग्नाः।
सरस्वतीपादयुगाब्जभृङ्गा
गङ्गाम्बुवत् पूतनिजान्तरङ्गाः।। १६ ।।

---

१. समवप्रविभ्यः स्थः (१.३.२२) इत्यनेनात्मनेपदम्।
२. प्रकाशनस्थेयाख्ययोश्च (१.३.२३) इत्यनेनात्मनेपदम्। तिष्ठते=निर्णेतृत्वेनाश्रयति।
३. सप्तम्यधिकरणे च (२.३.३६) इतिसूत्रस्थक्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् इति वार्तिकानुसारेण षष्ठी।
४. विपश्चिदुद्धाः प्रकाण्डपण्डिता इत्यर्थः। "मतल्लिकामचर्चिकाप्रकाण्डमुद्धतल्लजौ" (१.३.१७) इत्यमरः।

ज्ञानेन चाथो वयसा च वृद्धा
वृद्धा गुणानां प्रचयेन चापि।
विद्याव्रतस्नानपवित्रिताङ्गा
निराक्रियन्ते ऽद्य जनेन लोके।। १७।।

अज्ञानिनोऽत्यल्पधियो जनाश्च
सत्कारभाजो भुवि बोभवन्ति।
अन्ये च कौटिल्यपरायणा ये
ये वापि वाक्कौशलमाश्रयन्ति।। १८।।

अधःक्रिया विज्ञजनस्य तावत्
पुरस्क्रिया चाल्पधियो जनस्य।
सर्वत्र लोके परिदृश्यमाना
चेतोरुजं काञ्चन तन्तनीति।। १९।।

सैषा स्थितिर्नूनममङ्गलाय
देशस्य नः स्वर्गसमस्य लोके।
अपूज्यपूजाविधिराश्रितः सन्
श्रेयःप्रतीघातमवातनोति।। २०।।

जानन्नपीदं परमं रहस्यं
विवेकविश्रान्तधिया प्रवृत्तः।
न नेतृवर्गोऽत्र मनो ददाति
स्वार्थानुसन्धानपरायणः सन्।। २१।।

चाटूक्तयो दुष्टजनैः प्रयुक्ता
द्राक्षा इवास्मै[1] सुतरां स्वदन्ते।

---

१. रुच्यर्थानां प्रीयमाण (१.४.३३) इत्यनेन चतुर्थी।

देशाय[१] यत्स्वस्ति हिताय वास्ति
व्यापारयत्येष न तत्र दृष्टिम्।। २२।।

हितान्न यः संशृणुते स किंप्रभु[२]-
र्दित्यस्ति शुद्धा कविभारवेर्गीः।
सर्वत्र भोः! किंप्रभुतैव लोके
दुःखाकरा दृष्टिपथं प्रयाति।। २३।।

किं वा क्रियेतात्र कथं कदा च
केनेति वा कोऽपि न वेद सम्यक्।
अन्धो यथान्धं नयते तथैव
लोकस्य वृत्तिः परिलक्ष्यतेऽद्य।। २४।।

एवं प्रवृत्तेष्वधरोत्तरेषु
कलेः प्रभावात्प्रबलस्य तावत्।
चेखिद्यमानेषु जनेषु सत्सु
प्रभोः कृपैवास्ति परं शरण्यम्।। २५।।

अस्माभिरत्यन्तविनम्रभावात्
तदेकतानेन हृदाऽतिभक्त्या।
कारुण्यवारांनिधिरेव नित्यं
प्रभुः प्रजानां समुपासनीयः।। १६।।

(अनुष्टुब्वृत्तम्)

इत्येवोक्त्वा समासेन निध्याय कुशलं तथा।
भवतां सकुटुम्बानां वाचं स्वामुपसंहरे।। २७।।

सदा मङ्गलाभिलाषुकोऽहं
सत्यव्रतः

---

१. नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च (२.३.१६) इत्यनेन स्वस्तियोगे चतुर्थी।
२. किं क्षेपे (२.१.६४) इत्यनेन क्षेपार्थेऽर्थात् कुत्सितार्थे तत्पुरुषसमासः।

२.२.२००१ दिनाङ्के दिल्लीस्थं प्रियं तनूजं शरच्चन्द्रं प्रति मुम्बापुरीतः प्रेषितं पत्रम्

**प्रिय वत्स,**

ज्योग्जीव्या नित्यं चाभ्युदियाः।

(वियोगिनीवृत्तम्)

बहुलः समयो गतोऽधुना
स्वकुटुम्बाद्वसतः पृथङ् मम।
मनसि क्रमते[1] परं मम
स्मृतिसङ्घो मधुरो मुहुर्मुहुः।। १।।

प्रियमालपितं मनोरमं
श्रवणे मे स्पृशतीव बालयोः।
विविधं च तयोर्विचेष्टित-
मयनं मे व्रजतीव नेत्रयोः।। २।।

कुशलं मम सर्वथाऽत्र भो
नहि कस्मैचन वस्तुने स्पृहा।
नियतं प्रयतः परिग्रहा-
द्विरतः स्वं समयं नयाम्यहम्।। ३।।

प्रभुपादयुगाब्जसेवकः
स्मरणे तस्य निरन्तरं रतः।
करुणावरुणालयं गतः
शरणं तं मुदमाप्नुवे पराम्।।४।।

---

१. वृत्तिसर्गतायनेषु क्रमः (१.३.३८) इत्यनेन तायनार्थे आत्मनेपदम्। क्रमते=तायते, स्फीतीभवतीत्यर्थः।

समुपास्य हृदा सरस्वतीं
कृपया चापि तयाऽवलोकितः।
विविधान् विषयानहं स्पृशन्
रचनाः स्वा रचयाम्यनेकशः।।५।।

कविताः कवयाम्यहं तदा
हृदयं मे भृशदुःखितं यदा।
वचनं स्फुरतीह मे पुरः
कविरब्रूत यदाङ्ग्लदेशजः।।६।।

यदि दुःखभरस्य वर्णनं
निजगीतेषु भवेत् क्वचित्तदा।
अतिरुच्यानि भवन्ति तानि नो
मनआर्तिसमावृता हि मुत्।।७।।

गणतन्त्रदिनेऽभवत्तु यत्
मनआर्तिं तदजीजनन्मम।
नहि कलये क्षणं क्षण-
मपि दुःखभरार्दितः परं ततः।।८।।

भुवि कम्पनमन्वभूयत
मयकाऽत्रस्थितिकेन यद्यपि।
न भयावहता तथाप्यथ
हा! कलयाऽपि मया ऽन्वमीयत।।९।।

अधिगत्य तु दूरदर्शनात्
सकलं गुर्जरवृत्तमास्त मे।
सुतरां व्यथया ऽऽकुलं मनो
द्रवितं चापि समन्ततो ऽभवत्।।१०।।

शतशोऽथ सहस्रशो गृहा-
ण्यपतन् भूमिविकम्पनादिना।।
शतशश्च सहस्रशो जना-
स्तदधस्ताद्विलयं गताः क्षणात्।। ११।

नहि कालमलब्ध कश्चना-
पगमायापि जनः कुतश्चन।
स्वगृहे स्थित एव स क्षणात्
पतितोऽभूद् यमजालके तदा।। १२।।

किमिदं कुत एतदिष्टका-
पतनं किं प्रलयः प्रवर्तते?।
इति सम्भ्रमसाध्वसाज्जनो
जडतामेव तदोपपेदिवान्।। १३।।

अनुभूय बलात्प्रकम्पनं
लघुदोला मरुता हृता यथा।
सहसा बहुभूमिका गृहा
अभवन् भूमिगताः सहस्रशः।। १४।।

जनता क्षतविक्षता तदा
गृहभङ्गोत्पतितोरुखण्डकैः।
कृतचीत्कृतदारुणध्वनि-
रसहाया करुणां दशां गता।।५।।

"विललाप च बाष्पगद्गदं
सहजामप्यपहाय धीरताम्।"
छदिभित्तिगवाक्षभूतल-
शकलाधःपतितो जनस्तदा।। १६।।

नहि वेद कुतो गतो ऽभवत्
स्वजनस्तस्य भवेद् व्यसुः किल।
बहुभारवशाद् भयङ्करात्
पतितात् स्वोपरि कष्टदात्तदा।। १७।।

अणुभावमपि स्वदेहकं[1]
नहि कर्तुमितस्ततोऽभवत्।
अवरोधवशाच्च नेत्रयो-
रशकन्नैव च किञ्चिदीक्षितुम्।। १८।।

गमितः करुणामिमां दशां
विधिना क्रूरतरेण मानवः।
सहसा शवतामवाप्तवान्
अवरोधाच्छ्वसनस्य कष्टदात्।। १९।।

यदि दैववशात्कथञ्चन
नहि मृत्योर्वशमेष ईयिवान्।
प्रविखण्डनवेष्टितस्तदा
मृतकल्पं स्वममन्यतैव सः।। २०।।

अथ वृत्तमिदं प्रसारितं
समभूद्वृत्तहरैर्जनैर्यदा।
सकलं जगदास्त सर्वथा
लिपिकर्मार्पितलेखवत्तदा।। २१।।

महतीं विपदं प्रपन्नवान्
सकलो गुर्जरदेशजो जनः।
घटितं विधिना बलीयसा
घटितं तत्र सुदारुणं बत!।। २२।।

---

१. अनुकम्पायां (५.३.७६) इत्यनेन कन्।

इति चिन्तनतत्परो जनो
निजदेश्यः परदेशजोऽथवा।
अभवत्प्रसभं सहायता-
करणार्थं त्वरितस्तदा हृदा।। २३।।

यदि जीवति कश्चनापि तं
बहिराक्रष्टुमुपायमाश्रये।
क्षतविक्षतजीवरक्षणं
मम कल्पः प्रथमो भवेदिह।। २४।।

इति निश्चयमाश्रितो जनः
श्रममत्यन्तमवातनोत्तदा।
बहुधा ऽप्यशकच्च नह्यसौ
सफलो यन्त्रविनाकृतोऽकृती।। २५।।

शतशो निलया निलीनता-
मुपयाता इति तत्कृतेऽभवत्।
बहुसङ्ख्यकयन्त्रसाधनं
सुलभं चास्त न तत्क्वचित्तदा।। २६।।

तदभाववशाद्गता अहो!
अतिदीर्घं समयं न सक्षमाः।
बहुयत्नेऽपि न जीवधारणे
प्रबभूवुर्यमसद्म चाप्यगुः।। २७।।

अथ यन्त्रसमूह आगते
निकटाद्वाऽप्यथ दूरतो ऽपि वा।
समयेन विगच्छता ऽभवज्
नहि जीवितजीवजीवनं क्षमम्।। २८।।

भुचऊपुरि कच्छदेशगे
भुजसञ्ज्ञे नगरेऽञ्जरे तथा।
अपरेषु पुरेषु चाभवद्
बहुसद्मक्षतिगर्तिदा किल।। २९।।

स्थितिरास्त बहुत्र कष्टदा
नगरौघेष्वपि नाशलीलया।
परितो विकटा विनष्टिरा:!
समवालोक्यत रोमहर्षिणी।। ३०।।

(अनुष्टुब्वृत्तम्)

पत्रसम्प्रेषणस्याद्य यत: कालोऽपगच्छति।
अतोऽन्यदिवसे पत्रमन्यत् प्रेषयितास्म्यहम्।। ३१।।

तत्र भूयोऽपि विषयमेतं स्प्रक्ष्यामि दु:खदम्।
नहि मे तत्र वक्तव्यं विषण्णेनान्तरात्मना।। ३२।।

सर्वथा कुशली त्वं स्या: सभार्य: सहपुत्रक:।
इत्येव प्रार्थये प्रह्व: शङ्करं लोकशङ्करम्।। ३३।।

स्निग्धस्ते तात:
सत्यव्रत:

**७.११.२००१ दिनाङ्के शरच्चन्द्रमेव मुम्बापुरीप्रवासकाले प्रेषितं पत्रम्**

**प्रिय वत्स,**

ज्योग्जीव्या नित्यं चाभ्युदियाः।

(भुजङ्गप्रयातवृत्तम्)

मया प्रेषितं पत्रमासीद्दिनानां
त्रयात्पूर्वमासादितं स्यात् त्वया तत्।
मया तत्र भूकम्पवृत्तान्त आसीद्
भृशं दुःखदो वर्णितो विस्तरेण।। १।।

अपूर्णः स वृत्तान्त इत्याकलय्ये-
तरे पत्र आविष्करिष्यामि तं यत्।
मया प्रोक्तमासीत् तदेव प्रकर्तु-
मनेन स्वपत्रेण सम्यग् यतिष्ये।। २।।

पुरेष्वेव नासीन्महान् गेहनाशो
दृशो गोचरो ग्रामसङ्घेऽपि सोऽभूत्।
कुटीराणि भग्नानि तत्राप्यसङ्ख्या-
न्यहो! चित्रचित्रो विलासो विधातुः।। ३।।

न भग्नानि येषामभूवन् गृहाणि
भयात्तेऽपि तद्भङ्गमुत्प्रेक्ष्य दीनाः।
तिरश्चीनतां तेषु दृष्ट्वांशभङ्गं
विलोक्याथवा मार्गमेव प्रपन्नाः।। ४।।

निशायां विशेषेण शीतार्दितास्ते
युवानश्च वृद्धाश्च बालास्तथा च।

पुमांसश्च योषाश्च सर्वेऽपि लोका
निराच्छन्नदेशं गता भीतभीताः ।। ५ ।।

न खाद्यं न पेयं न वा लेह्यमासीत्
सुलभ्यं जनानां गृहान्निर्गतानाम् ।
बुभुक्षार्दितास्ते कथञ्चित् त्रियामां
व्यनैषुः स्वभाग्यं भृशं गर्हमाणाः ।। ६ ।।

निशायां गतायां प्रजाते प्रभाते
निरीक्ष्य स्ववेश्मानि शीर्णानि भूयः ।
मुहुर्निःश्वसन्तोऽश्रुपूर्णेक्षणास्ते
स्ववस्तुव्रजान्वेषणे सम्प्रवृत्ताः ।। ७ ।।

ततः शासनेनापि साह्यं प्रदत्त-
ममूद्येन भग्नेष्टकाद्यन्तरस्थान् ।
विनिष्कासितुं कर्मिणः सम्प्रवृत्ता
भवेयुर्जना जीवितास्तेषु कच्चित् ।। ८ ।।

अभूवन् मृता ये शरीराणि तेषां
तदीयाय बन्धुव्रजायार्पितानि ।
अभूवन्, यतस्तेऽन्त्यकृत्यं विधातुं
समर्था भवेयुः प्रियाणां जनानाम् ।। ९ ।।

इदं श्रूयते यन्मृदोऽधो गतोऽपि
दिने द्वे ततो वाधिकं कालमेव ।
जनः प्राणधृग् यन्त्रसाह्येन विज्ञैः
समाकृष्यतारोग्यतां नायितश्च ।। १० ।।

निशम्येति[१] मेतां परार्थैकचित्ताः,
स्वदेश्या विदेश्याश्च लोका अनेके ।

---

१. निशम्य ईतिमितिच्छेदः । ईतिर्डिम्बप्रवासयोः (३.३.६८) इत्यमरः । डिम्ब उपद्रवः ।

इदं स्थानमापेतुरत्यार्द्रचित्ताः
पदार्थादिसाह्यप्रदानप्रणुन्नाः।। ११।।

जने नैवमेवाभवत् संविभक्तं
मनोदारणं दारुणं दुःखमत्र।
कवीनां वरः सत्यमेवाह दुःखं
विभक्तं भवेत्सह्यपीडं जगत्याम्।। १२।।

(अनुष्टुब्वृत्तम्)

इति वृत्तं यदत्राभूद् वृत्तं तेऽहं न्यवीविदम्।
मा ग्लासीस्तद्विदित्वा त्वं सुकुमारः कुमारकः।। १३।।

(आर्य्यावृत्तम्)

नियतिकृतनियमसहिताः
प्रादुःषन्त्येव यदा कदेतयः।
नहि विजहति धीराः स्वं
धैर्यं कृतबुद्धयः सन्तः।। १४।।

आशासे त्वं स्नुषया
सङ्गतिमान् पुत्रकेण पुत्र्या च।
समयं गमयसि सुखितः
कृत्यैर्गुरुभिर्हृतस्वान्तः।। १५।।

इति सामासिकं वचः
स्निग्धस्य ते तातस्य
सत्यव्रतस्य

१२.४.२००१ दिनाङ्के कानपुरस्थां डा० नलिनी शुक्लामहाभागां
प्रति प्रेषितं पत्रम्

आयुष्मति,
सस्नेहं प्रणतयः

(उपजातिवृत्तम्)

पत्रं समासाद्य शुभं भवत्या
माध्वीकमाधुर्यधरं मनोज्ञम्।
अलङ्कृतं पद्यवरैः सुपुष्टै-
र्हर्षप्रकर्षो हृदि मे न माति।। १।।

अकिञ्चनं मां प्रति योऽस्ति भाव
आविष्कृतः स्नेहवशाद् भवत्या।
तेनाभिभूतो बहु वक्तुमीशो
नास्मीति सन्देहलवो न कश्चित्।। २।।

स्नेहोऽयमन्तःकरणे प्रसीव्यन्
भ्रातुः स्वसुश्चापि निरन्तरेण।
समेधतामित्ययमेव मेऽद्य
मनोरथो यं प्रकटीकरोमि।। ३।।

स्वस्था च हृष्टा च सदा सुपुष्टा
वेदादिशास्त्राभ्यसने प्रसक्ता।
स्नेहात्कुटुम्बेन च सेव्यमाना
चिराय जीव्याद् भवती सुखेन।। ४।।

इत्याशीः
सत्यव्रतशास्त्रिणः

रत्नगिरिस्थां डा० कल्पना भालेकर महाभागां २३.११.२००१ दिनाङ्के प्रेषितं पत्रम्

आयुष्मति शुभाशीः।

(उपजातिवृत्तम्)

वृत्तं मनोमोदकरं भवत्याः शुभं द्वितीयाश्रमसङ्क्रमस्य।
संसूचयत् पत्रयुगं मयाऽद्यापराह्णकाले समवापि हृद्यम्।। १।।

भर्त्रा समं सर्वसुखानि भुङ्क्तां पुष्टा च हृष्टा च सदा च तुष्टा।
सङ्क्रीडमाना[1] च सुतैः सुताभिः स्नेहेन लोकेन च वीक्ष्यमाणा।। २।।

भर्त्रा समं देशहिते प्रसक्ता भक्ता च वाचः सुतरां सुराणाम्।
शतं समानां भवती सुखेन जीव्याद्यशः सम्प्रवितन्वती स्वम्।। ३।।

इत्याशीः

सत्यव्रतशास्त्रिणः

१. क्रीडोऽनुसम्परिभ्यश्च (१.३.२१) इत्यनेनात्मनेपदम्।

### जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति
### २६.११.२००१ दिनाङ्के प्रेषितं पत्रम्

मान्याः,

सप्रश्रयं प्रणतयः।

(उपजातिवृत्तम्)

स्नेहाप्लुतं पत्रवरं परेद्युः
सम्प्राप्य वो मोदभरोऽन्तरङ्गे।
न माति मे स्निग्धतमस्य बन्धो-
र्वृत्तप्रवृत्तिः प्रमुदे न कस्य।। १।।

दीपावलीपावनपर्व हर्ष-
प्रकर्षवर्षं तनुयाद् भवत्सु।
स्वास्थ्यं च देयाद् विमलं यशश्च
कुन्दावदातं सकलासु दिक्षु।। २।।

देशेऽस्मदीये परमां समृद्धिं
दरिद्रतार्ते तनुयात् सुखं च।
विश्वस्य विश्वस्य भवेद्यतोऽयं
मूर्धाभिषिक्तो महितश्च कामम्।। ३।।

आतङ्कवादादतिनिन्दनीयाद्
कष्टप्रदात्स्यादतिशीघ्रमेव।
एतस्य मुक्तिः सुखदा जनस्य
सर्वाश्च बाधाः प्रशमं प्रयान्तु।।४।।

पूतात्मनां चापि सतां प्रतिष्ठा
रम्येऽत्र देशे पुनरेव भूयात्।
कष्टश्रिता[1] येन न ते भवेयु-
र्लोकेन हीना इति गण्यमानाः।।५।।

देशे भवेच्चात्र पुनः प्रचारो
वाचः सुराणां सुरलोककाम्ये।
इत्येव सम्प्रार्थ्य प्रभुं महेशं
वाचं स्वकीयामुपसंहरामि।।६।।

भावत्कोऽहं बन्धुः
सत्यव्रतशास्त्री

---

१. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२.१.१४) इत्यनेन तत्पुरुषसमासः।

**श्रीरक्षपालराकेशशास्त्रिमहाभागान् पाटलिपुत्रस्थान् तेषां पौत्रस्य विकासस्य विवाहोपलक्ष्ये २७.११.२००१ दिनाङ्के प्रेषितं वर्धापनपत्रम्**

**मान्येभ्यः सप्रणयं प्रणतयः।**

(उपजातिवृत्तम्)

प्रियस्य पौत्रस्य विकासनाम्नो
विवाँहसंसूचकपत्रमाप्त्वा।
वर्धापना अत्रभवत्सु नैकाः
सम्प्रेषये मोदभृतान्तरङ्गः।। १।।

सौख्यं प्रभूतं कृतदार एष
समश्नुवीत प्रमना विकासः।
शुभं द्वितीयाश्रममाश्रितः सन्
स्वकृत्यजातेऽवदधीत नित्यम्।। २।।

सुधीजनैस्तत्त्वदृशा न्यरूपि
सर्वोपकारक्षम आश्रमोऽयम्।
एनं समाश्रित्य जनः समस्य
लोकस्य सेवां खलु कर्तुमीशः।। ३।।

पुत्रैश्च पौत्रैश्च मुदा युतोऽयं
सङ्क्रीडमानः सवयोऽवियुक्तः।
संसेवमानः सुधियो गुरूंश्च
जनस्य कल्याणमभीप्समानः।। ४।।

देदीप्यमानोऽर्क इव स्वभासा
कलेव चन्द्रस्य विवर्धमानः।
अवाप्तमानोऽपि गताभिमानो
जीव्यादयं वर्षशतं सुखेन।। ५।।

इत्याशीः
सत्यव्रतशास्त्रिणः

**९.१.२००२ दिनाङ्के श्री चि० एस रावमहाभागान् हैदराबादस्थान् प्रति प्रेषितं पत्रम्**

**मान्याः,**

**सप्रश्रयं प्रणतयः**

(अनुष्टुब्वृत्तम्)

भवत्पत्रं समासाद्य प्रमोदः परमो मम।
बन्धूनां कुशलोदन्तः कस्य नो मोदमावहेत्।। १।।

नववर्षशुभाशंसा भवद्भिः प्रेषिता मयि।
चित्तद्रवं ममाकार्षुः सत्यं वाचामगोचरम्।। २।।

वर्षीयानस्मि संवृत्तः कृशः कायेन चास्म्यहम्।
तथापि मनसा स्वस्थः कृत्यजाते रमेऽनिशम्।। ३।।

आराधनादृते वाचो नहि प्रियतरं मम।
व्यापारयामि तत्रैव सुखितः स्वं दिवानिशम्।। ४।।

आराध्यमाना वाग्देवी प्रसादसुमुखी भवेत्।
मयीति प्रतियन् बाढं तत्रैवाभिरतोऽस्म्यहम्।। ५।।

भवतां सुकुटुम्बानां सम्प्रार्थ्य कुशलं प्रभुम्।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।। ६।।

हैदराबादस्थान् श्री चि० एस राव महाभागान् १९.२.२००२
दिनाङ्के प्रेषितं पत्रम्

मान्या
जयतु भारती।

(अनुष्टुब्वृत्तम्)

पत्रद्वयं समासाद्य स्नेहपूरेण पूरितम्।
भवतामहमानन्दं वागगोचरमाप्नवम्।। १।।

लब्धप्रतिष्ठा विद्वत्सु वागुपासनतत्पराः।
भवन्तः सत्सु धौरेया विरला जगतीतले।। २।।

प्रार्थये पार्वतीजानिं श्रेयसे भवतामहम्।
दीर्घायुष्याय शुभ्रायै विततायै च कीर्तये।। ३।।

रामकीर्तिमहाकाव्यसम्बद्धं प्रतिभोत्थितम्।
प्रवर्तयितुमिच्छन्ति विमर्शं सन्त इत्यतः।। ४।।

प्रमोदो मे महांश्चित्ते सन्तोषोऽपूर्व एव च।
"हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा"।। ५।।

तस्मिंल्लेखे गते विज्ञाः! प्रसिद्धिं संविदि द्रुतम्।
तं वाचयितुमिच्छामि नातः प्रियतरं मम।। ६।।

इत्येवोक्त्वा समासेन प्रणामं विनिवेद्य च।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।। ७।।

**२२.२.२००२ दिनाङ्के वाराणसेयान् डा० रेवाप्रसादद्विवेदिमहाभागान् प्रति प्रेषितं पत्रम्**

**प्रिया भ्रातृवर्याः,**
**सस्नेहं प्रणतयः।**

(उपजातिवृत्तम्)

मासं विदेशे व्यतियाप्य देशे
स्वके निवृत्तेन मयाऽऽपि पत्रम्।
स्नेहाप्लुतं यद्भवदीयमाधा-
च्चित्ते मदीये परमं प्रमोदम्।।१।।

(वसन्ततिलकावृत्तम्)

श्रीवाण्यलङ्करणघोषणसम्प्रजातः
स्नेहार्द्रवृत्तिषु भवत्सु मुदां भरो यः।
स्वाभाविकं तमाकलये न तत्र
चित्रं विभाति मम किञ्चिदपीति सत्यम्।।२।।

मर्माणि सीव्यति विलक्षण एव तन्तुः
स्नेहस्वरूप उभयोरपि मानसं नौ।
दूरस्थयोरपि परस्परबद्धबुद्ध्यो-
रन्योन्यमङ्गलविचिन्तनचित्तवृत्त्योः।।३।।

(शार्दूलविक्रीडितवृत्तम्)

सन्तो नित्यं जुषन्तां भुवि विमलतमं कीर्तिपुञ्जं भवन्तो
विद्वद्गोष्ठीगरिष्ठाः कविकुलमणयो हस्तयुग्मावचेयम्।
इत्येवाभ्यर्थ्य नम्रस्त्रिभुवनभवनाधीश्वरं देवदेवं
शास्त्री सत्यव्रतोऽयं विरमयति गिरं मङ्गलेप्सुः स्वकीयाम्।।४।।

**१८.३.२००२ दिनाङ्के मुम्बापुरीस्थान् श्री चि. एस. रावमहाभागान्**
**प्रति प्रेषितं पत्रम्**

**मान्येभ्यो नमो नमः।**

(अनुष्टुब्वृत्तम्)

द्वादशे दिवसे मासस्यास्य सम्प्रेषितं शुभम्।
पत्रं भावत्कमासाद्य प्रमोदः परमो मम।।१।।

रामकीर्तिमहाकाव्यं भवद्भ्यो ऽरोचतेत्यहम्।
कलये धन्यमात्मानं भवत्तोषात् सुखावहात्।।२।।

थाइदेशगता रामकथा भिन्ना स्वदेशतः।
नाना प्रसङ्गास्तत्रत्या न प्राप्यन्त इहाद्भुताः।।३।।

सीतायाश्चरितं चापि श्रीरामचरिते तथा।
अतीव भेदसम्भारो दृशोरयनमृच्छति।।४।।

देशान्तरगतायां नु कथायां सम्भवेदिदम्।
स्वोपज्ञं बहु तद्देश्यैः समायोज्यत एव हि।।५।।

तथापि रुचिरं तत्र बह्वस्तीति न संशयः।
तद्दृष्ट्यैव ममारम्भः काव्यप्रणयनेऽभवत्।।६।।

भाषाचतुष्टये काव्यस्यानुवादोऽस्य सम्प्रति।
भारतीये ऽस्ति सञ्जातो यो मेऽत्यन्तसुखावहः।।७।।

कार्णाट्या चापि हिन्द्या च भाषया तमिलाख्यया।
अनूदितमिदं काव्यं वाचा चासमयीयया।।८।।

सदा भवन्मङ्गलाभिलाषी
**सत्यव्रतः शास्त्री**

## २२.३.२००२ दिनाङ्के मैनपुरीस्थान् श्रीप्रकाशचन्द्रमिश्रमहाभागान् प्रति प्रेषितं पत्रम्

मान्येषु दिल्लीस्थस्य सत्यव्रतस्य मे विलसन्तु प्रणामाञ्जलयः।

(अनुष्टुब्वृत्तम्)

आसीषदं भवत्पत्रं तेनापं च परां मुदम्।
या न वर्णयितुं शक्या शक्रेणापि कथञ्चन।।१।।

प्रकाशकिरणावल्या उद्भासितमना भृशम्।
तदन्तःस्थं प्रकाशौघमन्वभूवमहं सुखम्।।२।।

तत एव विचारा मे प्रादुःषन्ती[1]ह केचन।
यानद्य पत्रमारोप्य भवत्सु प्रहिणोम्यहम्।।३।।

किं शीर्षकं भवेत्तेषां न तद् वेद्मि कथञ्चन।
भूमिका प्राग्वचो वेति यद्वा तद्वा भवत्विति।।४।।

विषयेऽत्र भवन्तो हि प्रमाणं परमं मम।
भवत्प्रवृत्तिरत्रास्तु यथारुचि यथामति।।५।।

इत्येवोक्त्वा समासेन भवन्मङ्गलकाङ्क्ष्यहम्।
स्नेहसंसिक्तहृदयो वाचं स्वामुपसंहरे।।६।।

भवदभिन्नहृदयः
सत्यव्रतः शास्त्री

---

१. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः (८.३.८७) इत्यनेन सन्तीति सकारस्य षकारः।

२३.४.२००२ दिनाङ्के इन्दौरनगरस्थान् डा० प्रभाकरनारायणकवठेकरमहाभागान् प्रति प्रेषितं पत्रम्

मान्याः,

(अनुष्टुब्वृत्तम्)

आयुष्मतः प्रसादस्य प्रसादवशतः प्रभोः।
यज्ञोपवीतसंस्कारो जायते न चिरादिति।।१।।

भवत्पत्राद्विदित्वा मे प्रसादः परमो हृदि।
पौत्रसंवर्धना सत्यं कस्य नैव मुदे भवेत्।।२।।

प्रसादसुमुखो बालः प्रसादोऽयं निरन्तरम्।
मेधया यशसा कान्त्या वर्धतामिति तत्कृते।।३।।

प्रार्थये पार्वतीजानिं प्रह्वः प्राञ्जलिरन्वहम्।
सत्यव्रतोऽहं दिल्लीस्थो वाचं स्वां चोपसंहरे।।४।।

२३.४.२००२ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

(अनुष्टुब्वृत्तम्)

वर्धापनासुधासिक्तं पत्रं भावत्कमद्य मे।
समासाद्य वहत्येव चेतस्यानन्दनिर्झरः।।१।।

विद्यामार्तण्डसंमानः समेषां साहितीजुषाम्।
संमान इति बुद्ध्यैवाऽहं स्वीकुर्वे तमादरात्।।२।।

भवतां सकुटुम्बानां स्वास्थ्यमारोग्यमेव च।
प्रार्थयेऽहं प्रभुं प्रह्वो वाचं स्वां चोपसंहरे।।३।।

भवदभ्युदयाभिलाषुकः
सत्यव्रतः

मैनपुरीस्थान् श्रीप्रकाशचन्द्रमिश्रान् प्रति ६.५.२००२ दिनाङ्के प्रेषितं पत्रम्

मान्याः,

(अनुष्टुब्वृत्तम्)

पत्रमासीषदं हृद्यं भवतां ज्ञानसंप्लुतम्।
आनन्दं चाविदं तेन सत्यं वाचामगोचरम्।।१।।

पदवाक्यप्रमाणज्ञाः शास्त्राध्ययनचुञ्चवः।[1]
भवादृक्षा विदां वर्या न सन्ति बहवो भुवि।।२।।

यशस्करीति शब्दोऽपि साधुरेवेति मे मतिः।
हेत्वाद्यर्थेषु भगवान् टमत्र प्रत्यपादयत्।।३।।

नाभिप्रेतास्तु तेऽर्थाःस्युर्यत्र, तत्र पचाद्यचा।
श्रेयस्करेति रूपं स्यादाकृत्या स गणः स्मृतः।।४।।

तपतिस्तापनार्थेऽपि प्रयुक्तो बहुशो बुधैः।
शिष्टप्रयोगात्साधुत्वं सम्भवेदेव तस्य हि।।५।।

प्रकाशकिरणावल्या अपरोऽपि मया सुखम्।
दृष्टोंऽशो येन मे प्रीतिः सुतरामभिवर्धते।।६।।

प्रकाशनीयो ग्रन्थोऽयं न चिरादिति मे मतिः।
अवश्यकार्ये कार्ये स्यान्न विलम्बः सुखावहः।।७।।

इत्येवोक्त्वा समासेन प्रणामं विनिवेद्य च।
भवत्सु विज्ञवर्येषु वाचं स्वामुपसंहरे।।९।।

भवदाश्रवोऽहं

सत्यव्रतःशास्त्री

---

१. तेन वित्तश्चुञ्चुप्चणपौ (५.२.२६) इत्यनेन चुञ्चुप् प्रत्ययः। शास्त्राध्ययनाद्वित्ताः प्रसिद्धा इति शास्त्राध्ययनचुञ्चवः।

१.७.२००२ दिनाङ्के पटियालास्थान् डा० इन्द्रमोहनसिंहमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,
सस्नेहं प्रणतयः।

(उपजातिवृत्तम्)

पत्रं समासाद्य शुभं भवद्भिः
सम्प्रेषितं रम्यवचोऽभिरम्यम्।
विलक्षणस्नेहजलाभिषिक्तो
मनोमयूरो मम मोमुदीति।। १।।

पञ्चाम्बुदेशः प्रथितः पृथिव्यां
चिराय दृष्टो मयका नहीति।
तद्दर्शनेच्छा प्रबला मदीया
यां पूर्णतः पूरयितुं यतिष्ये।। २।।

चिराय लब्धः स्वजनेन सङ्गो
मुदां भरं चेतसि तन्तनीति।
नैके मदीयाः स्वजना लसन्ति
देशेऽत्र तद्दर्शनलालसोऽहम्।। ३।।

अगस्त्यमासप्रथमेऽह्नि सायं
यथार्थनाम्नि प्रवरे पुराणाम्।
पट्वालये प्राप्तिमहं मदीयां
सम्भावये सम्भवभावितात्मा।। ४।।

दिनद्वयं तत्र सुखेन चापि
साकं भवद्भिर्व्यतियाप्य हृष्टः।
दिल्लीपुरीं भारतराजधानीं
निवर्तिताहे सफलाभिलाषः।।५।।

निरन्तरं कार्यभराभिभूतो
भूतार्थ[1]चिन्ताप्रसितश्च नित्यम्।
कांश्चित्क्षणान् विश्रमकामुकोऽहं
तन्मे नवत्वं तनुयादवश्यम्।।६।।

पुनर्नवेव ध्रुवमेव सङ्गः
सह प्रियैः स्वैर्नवतां विदध्यात्।
इत्येव तावन्मनसा विचिन्त्य
पट्वालयाद्यागमनोत्सुको ऽहम्।।७।।

न भाषणेच्छा मम मानसेऽस्ति
सम्भाषणेच्छा तु वरीवृतीति।
तदेव यद्यस्तु प्रियं मम स्या-
दित्येव तावत् प्रविचिन्तयामि।।८।।

अत्र प्रमाणं तु भवन्त एव
नातो ऽधिकं वक्तुमिहास्मि शक्तः।
सन्तो भवन्तः सुतरां प्रिया मे
प्रियं भवद्भीःपरिपालनं च।।९।।

भवतां सकुटुम्बानां कुशलमनुध्याय विरमाम्यहं भवदभिन्न-
हृदयः सत्यव्रतः।।

१. भूतार्थः=तत्त्वार्थः।

**१५.७.२००२ दिनाङ्के कालिकातास्थान् प्रो० रमारञ्जनमुखोपाध्यायमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्याः,**

**सप्रणयं प्रणतयः।**

(उपजातिवृत्तम्)

आसाद्य पत्रं भवदीयमद्य
हर्षप्रकर्षो हृदि मे न माति।
वचोऽत्र मे केवलमेतदेव
यथा नियुक्तोऽस्मि तथा करोमि।। १।।

प्रमाणभूता भुवि सज्जनानां
माधुर्यदाक्षिण्यगुणाकराश्च।
विद्याव्रतस्नानपवित्रिताङ्गाः
सन्तो भवन्तो विलसन्ति लोके।। २।।

कालप्रभावाद्ध्वसितप्रभावा
गीर्वाणगीर्यद् ध्रियतेऽधुनाऽपि।
तदर्थमत्यर्थकृताभियोगा
भवादृशा एव निबन्धनानि।। ३।।

उक्त्वैतदेव प्रणतेन मूर्ध्ना
सदाऽभिकाङ्क्षी भवदाशिषोऽहम्।
सत्यव्रतो दिल्लिपुराधिवासी
वाचं स्वकीयामुपसंहरामि।। ४।।

१८.७.२००२ दिनाङ्के पटियालास्थान् डा० इन्द्रमोहनसिंहमहाभागान्
प्रति प्रेषितं पत्रम्

**प्रिया बन्धुवर्याः,**

सस्नेहं प्रणतयः।

(अनुष्टुब्वृत्तम्)

पत्रेणानेन सत्राहं चित्रद्वयकमात्मनः।
प्रेषये विवृतिं स्वस्य यथेष्टां जीवितस्य च।।१।।

अगस्त्यमासप्रथमे दिवसे सहभार्यकः।
पट्वालयमुपैतास्मि पूर्वाह्ले दशवादने।।२।।

आयोज्यते हि व्याख्यानं यद्येकादशवादने।
समीचीनतरं तत्स्यात्तत्सौविध्याय मे भवेत्।।३।।

भोजनं तदनु स्याच्चेद्विश्रमस्तदनन्तरम्।
एवं सर्वा व्यवस्था स्यात्सर्वथाऽनुगुणा मम।।४।।

इत्येवोक्त्वा समासेन कुशलं भवतामहम्।
प्रभुं सम्प्राथ्र्य भूतेशं वाचं स्वामुपसंहरे।।५।।

भवत्सु स्निग्धः
सत्यव्रतः

३०.७.२००२ दिनाङ्के जयपुरस्थान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

मान्या महाकवयः,
सादरं नतिततयः।

(अनुष्टुब्वृत्तम्)

परेद्यवि समासाद्य भवत्पत्रं मनोरम्।
वाचामगोचरं कश्चिदानन्दं समवाप्नवम्।।१।।

विज्ञाय कुशलोदन्तं भवतां तेन मे मनः।
चिरायोदीक्षितं सत्यं परं तोषमुपागमत्।।२।।

जुलैसञ्ज्ञस्य मासस्य दशमेऽह्नि सुनिश्चितः।
पूज्यानां पितृपादानां जयन्त्युत्सव इत्यहम्।।३।।

विज्ञाय सम्प्रवृत्तोऽस्मि कृत्याकृत्यविचारणे।
उपस्थातुं ममेच्छास्ति प्रबलात्रोत्सवे शुभे।।४।।

शरीरसादः सुमहान् निरुणद्धि हि मां ततः।
दोलाचलसमा वृत्तिर्मनसो मम वर्तते।।५।।

शरीरेण भवेन्नैव मम चेत्समुपस्थितिः।
मनसोपस्थितस्तत्र स्यामेवेति न संशयः।।६।।

कुटुम्बशास्त्रिणः काव्यशास्त्रशीलनतत्पराः।
सौजन्यमूर्तयः सत्यं सुहृदो ऽतिप्रिया मम।।७।।

मद्वाक्याद्वर्धनीयाः स्युरिति सम्प्रार्थ्य सादरम्।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।।८।।

नलेटी ( कांगड़ा )स्थ श्री दुर्गादत्तशास्त्रिणः प्रति ९.११.२००२ दिनाङ्के प्रेषितं पत्रम्

मान्या,

जयतु भारती।

(उपजातिवृत्तम्)

आसाद्य पत्रं भवतां मनोज्ञं
न माति मेऽन्तःकरणे प्रमोदः।
वीचीतरङ्गाकुलिते निशीथे
पयः पयोधेः किरणैरिवेन्दोः।। १ ।।

मान्याः सतां शास्त्रविचारचर्या-
चणा भवन्तः कविकर्मधुर्याः।
गिरा सुराणां ग्रथने प्रसक्ता
ग्रन्थोच्चयस्य प्रमुदे सुराणाम्।। २ ।।

सम्प्रेषिता राष्ट्रपतिप्रदत्त-
सम्माननार्थं शुभकामना याः।
या वाऽऽशिषस्तत्कृत एष नम्रो
जनोऽस्ति सत्यं सुतरां कृतज्ञः।। ३ ।।

ज्ञानेन वृद्धान् वयसा च वृद्धान्
धर्मेण वृद्धान् तपसा च वृद्धान्।
प्रणम्य श्रद्धाभरितान्तरात्मा
सत्यव्रतोऽहं विरमामि वाचः।। ४ ।।

**१०.११.२००२ दिनाङ्के कालिकातास्थान् डा० सीतानाथ आचार्यमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्या विद्वद्वर्याः,**

**सस्नेहं प्रणतयः।**

(उपजातिवृत्तम्)

आसाद्य पत्रं भवतां प्रगेऽद्य
हृद्याक्षरन्यासविशेषशोभम्।
महाकवीनां धुरि संस्थितानां
मनोमयूरो मम मोमुदीति।। १।।

सम्मेलने दिल्लिपुरे प्रजाते
सुहृद्वरैर्यो मम सङ्गमोऽभूत्।
तस्य स्मृतिः स्थास्यति मेऽन्तरङ्गे
माध्वीकमाधुर्यधरा चिराय।। २।।

ग्रन्थद्वयी योपहृता भवद्भि-
र्मह्यं मयि स्नेहवशान्मया सा।
आमूलचूलं पठिताऽभवच्च
मन्मानसे तद्वशतो ऽतिहर्षः।। ३।।

वर्ण्ये पटुत्वान् नृषु लब्धवर्णा
वर्णोत्तमाधानविशेषदक्षाः।
रसादिसन्धानविलक्षणेक्षाः
प्रसादमाधुर्यगुणौघदीक्षाः।। ४।।

काव्याङ्गनाऽलङ्कृतिसम्प्रसक्ता
गम्भीरभावाभिनिवेशरक्ताः।
विपश्चिदुद्धौघसमीपसक्ता
न सन्ति सत्यं बहवो ऽद्य लोके।।५।।

(इन्द्रवज्रावृत्तम्)

अल्पास्तु ये सन्ति त एव सम्प्र-
त्यालम्बनं ज्ञानचयस्य लोके।
लोकोन्नतिस्तेष्वधि च प्रचारः
शास्त्रोच्चयस्येति समासतो गीः।।६।।

अल्पेषु तेषु प्रमुखा भवन्तः
काव्यादिशास्त्राभ्यसनप्रसक्ताः।
भक्ताः प्रभोर्विज्ञजनानुरक्ताः
सक्ताः सतां सन्ततसङ्गतौ च।।७।।

(उपजातिवृत्तम्)

यशोऽभिवृद्धिं भवदर्थमीशं
सम्प्रार्थये ऽहं च सुदीर्घमायुः।
स्वस्था भवन्तः सुखिनश्च सन्तो
नयन्तु कालं भुवि कीर्तिमन्तः।।८।।

समासतोऽहं गिरमित्युदीर्य
सत्यव्रतो दिल्लिपुराधिवासी।
स्नेहातिरेकार्द्रमना विनम्रो
वाचं स्वकीयामुपसंहरामि।।९।।

**पाटलिपुत्रस्थश्रीरक्षपालराकेशशास्त्रिणः प्रति १३.११.२००२ दिनाङ्के प्रेषितं पत्रम्**

आदरणीया विद्वद्वर्याः,

सादरं प्रणतयः।

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसा भवद्भिः प्रेषिता मयि।
अमन्दानन्दसन्दोहं मम चित्ते व्यजीजनन्।।१।।

भवतां सकुटुम्बानां कृतेऽपि भवतादिदम्।
प्रकाशपर्व शुभदमित्येषा प्रार्थना मम।।२।।

पुरातनं गृहं विज्ञाः! परित्यक्तं मयाऽधुना।
डिफैंसकालोनीत्याख्यवसतौ निवसाम्यहम्।।३।।

चत्वारिंशन्मया यत्र वर्षाणि गमितानि तत्।
परित्यज्य गृहं सम्प्रत्यहं नूत्नं समाश्रितः।।४।।

पुत्रो मे पूर्वमेवात्रागतोऽभूत् स्वेच्छया यतः।
तन्मोहादहमप्यत्र समागच्छं सभार्यकः।।५।।

दिल्ल्यामागमनं चेत्स्यात् कदाचित्तद् ध्रुवं गृहाः।
सनाथनीया अस्माकमित्येषा प्रार्थना मम।।६।।

इत्येवोक्त्वा समासेन भवन्मङ्गलकामुकः।
प्रणामं विनिवेद्याहं वाचं स्वामुपसंहरे।।७।।

सत्यव्रतशास्त्री

मुम्बापुरीस्थश्रीकवीश्वरमहाभागान् प्रति १४.११.२००२ दिनाङ्के प्रेषितं पत्रम्

मान्या विद्वद्वर्याः,

सप्रश्रयं प्रणतयः।

(अनुष्टुब्वृत्तम्)

दीपावलिशुभाशंसा भवद्भिः प्रेषिता मयि।
बाढं प्रकाशयिष्यन्ति पन्थानं जीवितस्य मे।।१।।

सम्मानो राष्ट्रपतिना[1] यो भवद्भ्यः समर्पितः।
तेनाभूदन्तरङ्गे मे हर्षवर्षो निरन्तरः।।२।।

या सेवा सुरभारत्या भवद्भिश्चरिता चिरम्।
मनसा कर्मणा वाचा कस्तां स्तोतुं क्षमो भुवि!।।३।।

(मालिनीवृत्तम्)

स्वसुखनिरभिलाषाः संस्कृतस्य प्रचारे
प्रतिदिवसमजस्रं व्यापृताः विद्वदुद्धाः।[2]
दिशि दिशि गमनेन स्वं श्रमं प्रापयन्तः
पृथुलजगति सत्यं सन्ति सन्तः कियन्तः।।।४।।

इति वचनमुदीर्य स्वां नतिं चार्पयित्वा
प्रभुचरणयुगं च प्रार्थ्य शुभ्रं यशो वः।
विरमयति भवत्सु स्नेहसंसिक्तचेता
भवदगणितगुणलुब्धो वाचमत्र स्वकीयाम्।।५।।

भवद्बन्धुः

सत्यव्रतशास्त्री

---

१. पतिः समास एवेत्यनेन घिसञ्ज्ञायां रूपम्।

२. प्रकाण्डविद्वांस इत्यर्थः। तथा चामरः–मतल्लिकामचर्चिकाप्रकाण्डमुद्धतल्लजौ (१. ३.२७)।

१.१.२००३ दिनाङ्के दिल्लीस्थान् डा० सातकडिमुखोपाध्यायमहाभागान् प्रति प्रेषितं पत्रम्

मान्येभ्यो नमो नमः।

नववर्षशुभाशंसा

(अनुष्टुब्वृत्तम्)

नववर्षं शुभं भूयाद् ऋद्धिसिद्धिसुखप्रदम्।
हर्षप्रकर्षं वृष्याच्च देयात् कीर्तिं च निर्मलाम्।। १।।

इति सम्प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।
प्रवर्ते च भवत्पत्रप्रत्युत्तरकृतावहम्।। २।।

भाषान्तरेभ्यो गैर्वाण्याऽनूदितानां सविस्तरम्।
भवल्लेखः परिचयं प्रस्तौति विस्मयावहम्।। ३।।

निबन्धनेऽस्य लेखस्य भवद्भिः यः श्रमः कृतः।
तदर्थं भवतो विद्वान् कैश्शब्दैः समभिष्टुयाम्।। ४।।

न सन्ति बहवोऽद्यत्वे ज्ञानसाधनतत्पराः।
तदर्थमर्पितस्वान्ता नितान्तमभियोगिनः।। ५।।

एतद्दृष्ट्या भवत्कार्यमभिनन्द्यतमं मतम्।
एतद् दृष्टान्तभूतं स्यात् शारदानां[1] विशेषतः।। ६।।

इत्येवोक्त्वा समासेन भवद्गुणगणैर्जितः।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।। ७।।

भवत्सु स्निग्धः

**सत्यव्रत शास्त्री**

---

१. ये परिपक्वबुद्धयस्ते विशारदा भवन्ति। शारदशब्दोऽयं प्रत्यग्रवाचीत्येवं च काशिकाकारेण व्याख्यातः। शारदाः=प्रत्यग्र (बुद्धयः)। अपरिपक्वबुद्धीनामित्यर्थः। शारदेऽनार्तवे (६.२.९) इत्यत्र शारदशब्दः पाणिनिना प्रयुक्तः।

**२.१.२००३ दिनाङ्के पुरीस्थान् डा० केशवचन्द्रदाशमहाभागान्**
**प्रति प्रेषितं पत्रम्**

**प्रिया बन्धुवर्याः,**
**सस्नेहं प्रणतयः।**

(अनुष्टुब्वृत्तम्)

भवत्पत्रमवाप्याहमन्येद्युः स्नेहसंयुतम्।
परं पारं प्रहर्षस्य गतोऽहं वागगोचरम्।।१।।

चित्रं मत्प्रेषितं सत्रा पत्रेणाभूत्ततोऽपि मे।
आनन्दः सुमहान् तन्मे पुरीस्मृतिमकारयत्।।२।।

स्नेहोऽत्रभवतां योऽस्ति मयि नैसर्गिकः स्थिरः।
तेनाभिभूतस्वान्तोऽहं स्नेहस्तादृक् सुदुर्लभः।।३।।

लोकेऽस्मिन् स्वार्थवशतः सज्जन्ति प्रायशो जनाः।
अन्यैः सहेति सर्वत्र स्थितिरेषा ऽवलोक्यते।।४।।

**भवन्मङ्गलकामुकः**
**सत्यव्रतशास्त्री**

२.१.२००३ दिनाङ्के कालिकातास्थान् डा० सत्यनारायणचक्रवर्तिमहाभागान्
प्रति प्रेषितं पत्रम्

**प्रिया बन्धुवर्याः**

सस्नेहं प्रणतयः।

(अनुष्टुब्वृत्तम्)

चित्रेण सह सम्प्राप्तं पत्रमासाद्य मेऽभवत्।
आनन्दः सुमहांस् तन्मे पुरीस्मृतिमकारयत्।। १ ।।

स्नेहोऽयं भवतां योऽस्ति मयि नैसर्गिकः स्थिरः।
तेनाभिभूतस्वान्तोऽहं स्नेहस्तादृक् सुदुर्लभः।। २ ।।

लोकेऽस्मिन् स्वार्थवशतः सज्जन्ति प्रायशो जनाः।
अन्यैः सहेति सर्वत्र स्थितिरेषा ऽवलोक्यते।। ३ ।।

निःस्वार्थवशतो ये तु स्नेहं स्वं वितरन्त्यहो!
अलौकिकचरित्रास्ते भुवि धन्यतमा मताः।। ४ ।।

सङ्ख्या विरलतां याति तेषामनुदिनं ततः।
कल्पतेऽति विषादाय सुधियां नात्र संशयः।। ५ ।।

वैरल्येऽपि तु सङ्ख्यायां सन्ति ह्येवात्र केचन।
अकारणं मयि स्निग्धा भवन्तोऽत्र निदर्शनम्।। ६ ।।

भवत्कृतेऽपि वर्षं स्यान् नूत्नं मङ्गलकारकम्।
इति सम्प्रार्थ्य लोकेशं वाचं स्वामुपसंहरे।। ७ ।।

भवत्स्वरूपोऽहं

सत्यव्रतशास्त्री

१५.३.२००३ दिनाङ्के पटियालास्थ डा० इन्द्रमोहनसिंहमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया डा० इन्द्रमोहनसिंहमहाभागाः,
सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

प्रथमेऽहनि मार्चाख्यमासस्याहं न्यवर्तिषि।
पुरात् पट्वालयादासं कोटिं श्रान्तेः परां गतः।।१।।

कण्ठरोधमहं मध्येमार्गमेवानुभूतवान्।
स एष कण्ठरोधोऽभूदतितीव्रो निवर्तने।।२।।

अपरेद्युर्ज्वरस्तीव्रो मामाक्रामदतोऽञ्जसा।
स्निग्धेनैकेन भिषजा परीक्षणमकारयम्।।३।।

वायूरलाख्यो ज्वरोऽस्त्येष इति तेन परीक्षणात्।
कृतं निदानमुक्तञ्च सप्ताहं ज्वरसंस्थितिः।।४।।

सम्भाव्येतेति तद्धेतोरौषधं सेव्यतामिति।
एण्टीबायोटिकाख्यं तद्यन्मे नाण्वपि रोचते।।५।।

कुप्रभावं विदंस्तस्य कथं तत्र प्रवृत्तिमान्।
भवेयमिति शङ्कौघोऽमथ्नान्मे मानसं तदा।।६।।

सेव्यमेवौषधं ह्येतन्न ह्यस्ति तदृते गतिः।
एतया भिषजो वाचा प्रणुन्नस्तदसेविषि।।७।।

तत्सेवनेन विधिवज्ज्वरो व्यपगतोऽधुना।
कासस्तु बलवानस्ति कष्टं मे प्रबलं यतः।।८।।

न क्षणं क्षणमाप्नोमि क्षणदायां विशेषतः।
प्रादुर्भूतः शरीरे मे येन सादो ऽति दुःखदः।।९।।

औषधे सेव्यमानेऽपि कासः शान्तिं न गच्छति।
हेतोरतो महान् मेऽस्ति व्याधेराधिः प्रचोदकः।। १०।।

दिनैः कतिपयैः स्यान्मे स्वास्थ्यलाभ इति प्रभुम्।
प्रार्थये लोकलोकेशं स एव परमा गतिः।। ११।।

काव्यशास्त्रीयसिद्धान्तविमर्शनपरायणा।
या समायोज्यते गोष्ठी तत्कृते मे शुभाशिषः।। १२।।

सफला स्यादियमिति प्रार्थये पार्वतीपतिम्।
ज्ञानसत्रमिदं, तस्मादस्याः साफल्यमिष्यते।। १३।।

अत्रोपैष्यन्ति विबुधाः काव्यशास्त्रविशारदाः।
काव्यशास्त्रीयसिद्धान्ताञ्चर्चयिष्यन्ति ये ध्रुवम्।। १४।।

ते मे नमस्कृतिं वाच्याः प्रणिपातपुरःसरम्।
विद्वत्प्रवेकाः शास्त्रौघचर्चानिर्मलबुद्धयः।। १५।।

रीतिर्वक्रोक्तिरौचित्यं ध्वनिरित्येवमादयः।
सिद्धान्ताः काव्यशास्त्रीयैराचार्यैः प्रतिपादिताः।। १६।।

परवर्तिभिराचार्यैस्ते व्याख्याताः सविस्तरम्।
परीक्षिताश्च निपुणं तेषु केचिद्विशेषतः।। १७।।

सिद्धान्तानाममीषां तु प्रयोगेणान्वितिर्भवेत्।
इत्येतदर्थमेवैषा चर्चागोष्ठी प्रवर्तते।। १८।।

पूर्वं काव्यप्रणयनं ततस्तस्य विवेचनम्।
समस्तेष्वपि काव्येषु ह्येष स्वाभाविकः क्रमः।। १९।।

न काव्यशास्त्रसिद्धान्तान् हृदि कृत्वा मनस्विनः।
तेषां सम्यक् प्रयोगार्थं वर्तन्ते काव्यकर्मणि।। २०।।

काव्यं स्वतः प्रस्फुटति गिरेर्निर्झरिणी यथा।
न विचिन्त्य पदान्यत्र काव्यकाराः प्रयुञ्जते।। २१।।

तदेव काव्यं साध्वस्ति विरचय्य[1] यतः परम्।
विस्मितः सन् कविर्ब्रूते "किमिदं व्याहृतं मया?"।। २१।।

अतो हेतोः प्रसिद्धेयमुक्तिः सत्सु विवेकिषु।
"कविः करोति काव्यानि स्वादं जानन्ति पण्डिताः"।। २२।।

चर्चागोष्ठ्यां शरीरेण नोपस्थातुमहं क्षमः।
शुभाशंसा अतस्तस्यै पत्रेण प्रहिणोम्यहम्।। २३।।

अवश्यं समुपस्थेयं मयेति यदि वो वचः।
काव्येषु कालिदासस्य शब्दपाकविवेचनम्।। २५।।

अधिकृत्य निबन्धं स्वं प्रस्तोष्यामि सतां पुरः।
नाना वर्षाणि मे यत्र विमर्शः सम्प्रवर्तते।। २५।।

काव्यालङ्कारसूत्राणां वृत्तावाचार्यवामनः।
लक्षणं शब्दपाकस्य शब्दैरेभिरवर्णयत्।। २६।।

"यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्यायनिष्णाताः शब्दपाकं प्रचक्षते"।। २७।।

पदान्तरप्रयोगः स्यात् प्रयुक्तस्य पदस्य चेत्।
अभीप्सितार्थव्याघातस्तेन सम्पद्यते ध्रुवम्।। २८।।

इयमेव पदानां हि परिवृत्त्यसहिष्णुता।
शब्दपाकाभिधानेन वामनो यामवर्णयत्।। २९।।

समीक्षकेण पाश्चात्येनैकेनेयमभिष्टुता।
तादृशैः प्रखरैः शब्दैर्ये स्पृशन्ति मनो द्रुतम्।। ३०।।

परिवृत्तिः पदानां चेद् रक्तस्रावकरी भवेत्।
यदा तदैव वाक्यस्य विन्यासः शुभलक्षणः।। ३१।।

---

१. ल्यपि लघुपूर्वात् (६.४.५६) इत्यनेन णेरयादेशः।

अपरस्त्वपरैः शब्दैरिममेवाशयं व्यनक्।[1]
परिवृत्तिः पदेषु स्यात्तेषु चीत्कारकारिणी।। ३२।।

महाकवीनां कृतिषु प्राय एतद्विभाव्यते।
सर्वेषामेव, ते सन्ति वाग्देवीतत्त्वरूपिणः।। ३३।।

मया पुनः कृतो भूयान् श्रम औचित्यसाधकः।
पदौघे कालिदासस्य कवीनां चक्रवर्तिनः।। ३४।।

स्थालीपुलाकन्यायेन तत्पदान्युद्धराम्यहम्।
यत्र शब्दपरीपाको विशेषेण विजृम्भते।। ३५।।

द्वितीयसर्गप्रथमं पद्यमेवावलोक्यताम्।
रघुवंशे महाकाव्ये कालिदासस्य धीमतः।। ३६।।

(उपजातिवृत्तम्)

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच।। ३७।।

अथेति शब्देन महाकविः स
सर्गं स्वकं प्रारभते कुतश्चेत्।
शब्दो भृशं माङ्गलिकोऽयमस्ति
कण्ठाद्यतो ब्रह्मण उद्गतोऽयम्।। ३८।।

अत्रैव सर्गे तनयस्य लाभो
भवेद् दिलीपस्य, वरप्रसादात्।
अनन्यसेवानिरतस्य राज्ञो
वसिष्ठधेनोः सुरभेः सुतायाः।। ३९।।

---

१. विपूर्वादञ्ज्धातोर्लङि प्रथमपुरुषैकवचने रूपम्। स्पष्टीकृतवानित्यर्थः।

सम्भावितं मङ्गलवृत्तमारा-
दुद्भावयन् मङ्गलवाचकोऽयम्।
अथेति शब्दः कविना प्रयुक्त-
स्तद्दिव्यदृष्टिं प्रकटीकरोति।।४०।।

तथा गवार्थे कविना प्रयुक्तः
पद्येऽनवद्योऽत्र हि धेनुशब्दः।
गावं सवत्सां विबुधा वदन्ति
धेनुं, न सामान्यतयाऽस्ति सा गौः।।४१।।

अतो हि पीतप्रतिबद्धवत्सां
गां नन्दिनीं वर्णयते कवीन्द्रः।
तस्याः कृते धेनुपदप्रयोगं
करोति चौचित्यमिहास्ति यस्य।।४२।।

किञ्चात्र पीतप्रतिबद्धवत्स-
विशेषणेनास्त्यपरोऽपि भावः।
ध्वनिं गतो यो हृदयानि पुंसां
विलक्षणत्वेन चमत्करोति।।४३।।

लोके भवेद् गौरिह या सवत्सा
वात्सल्यपूर्णा न कथं भवेत्सा।
उपस्थितिर्वत्सल शब्द एव
वत्सस्य तं भावमपावृणोति।।४४।।

धेनोः सवत्सत्ववशादमुष्या
नृपे भवेदेव हि वत्सहीने।
कारुण्यबुद्धिः सहजैव, विद्यात्
सा निश्चितं तन्मनसो व्यथां नु।।४५।।

(इन्द्रवज्रावृत्तम्)

जायेति शब्दः कविना प्रयुक्तो
'जायाप्रतिग्राहितगन्धमाल्याम्।'
इत्यत्र सत्यं प्रकटीकरोति
सूक्ष्मेक्षिकां साधुपदप्रयोगे।।४६।।

शक्योऽत्र पत्नीतिपदप्रयोगः
कर्तुं स रुच्योऽपि भवेन्नितान्तम्।
आवर्तितोऽत्र प्रसभं पकारः
कुर्यादनुप्रासविशेषशोभाम्।।४७।।

(उपजातिवृत्तम्)

अथ प्रजानामधिपः प्रभाते
पत्नीप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सा-
मित्यत्र पाठे मधुरत्वमस्ति।।४८।।

तथापि पत्नीतिपदप्रयोगं
विहाय जायापदमेव पद्ये।
क्रान्तेक्षिणा सत्कविना प्रयुक्तं
तस्यार्थगाम्भीर्यविशेषवत्वात्।।४९।।

यज्जायतेऽस्यां पुनरित्युदारा
व्युत्पत्तिरस्त्यस्य पदस्य रूढा।
जाया भवेत्स्त्री प्रसवेन सूनो-
स्तदेव जायात्वममुष्यकायाः।।५०।।

धेनोः प्रसादेन नृपस्य पत्नी
सुदक्षिणा पुत्रवती भवेन्नु।
आगामिनीं तां घटनां विभाव्य
जायेति शब्दः कविना प्रयुक्तः।।५१।।

अन्यत्र पत्नीपदसार्थकत्वं
विभाव्य भोस्तत्पदमेव तेन।
जायापदं चापि विहाय भार्या-
पदं च युक्तं कविना प्रयुक्तम्।।५२।।

तथाहि

"तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।।५३।।

सुदक्षिणा नाम बभूव पत्नी
दाक्षिण्यरूढं दधती स्वनाम।
दिलीपनाम्नो नृपतेः स्वपद्ये
पूर्वोद्धृते प्राह कविप्रवेकः।।५४।।

पत्न्यध्वरस्यास्ति यथैव तावन्
नाम्ना प्रसिद्धा भुवि दक्षिणेति।
सुदक्षिणा तस्य बभूव तद्वत्
पत्नी दिलीपस्य नरेश्वरस्य।।५५।।

यतोऽध्वरेणोपमितो दिलीपः
सुदक्षिणा दक्षिणया तथा च।
पत्नीतिशब्दोऽत्युचितोऽत्र भाति
सुदक्षिणार्थं नहि चान्यशब्दः।।५६।।

(इन्द्रव्रावृत्तम्)

पत्युर्न आदेशविधिं विधत्ते
यज्ञेन संयोगविधौ विधिज्ञः।
पाणिन्यभिख्यः किल शब्दपाणि-
र्वाणीरहस्याकलने ऽद्वितीयः।।५७।।

---

१. पत्युर्नो यज्ञसंयोगे (४.१.३३) इति पाणिनिसूत्रम्।

(उपजातिवृत्तम्)

नृपं प्रजानामधिपं कवीन्द्र
आचष्ट दीर्घेण पदद्वयेन।
त्यक्त्वा त्वनेकान् नृपभूपरूपान्
स्वल्पाक्षरान् राजकृतेऽन्यशब्दान्।।५८।।

अथ प्रजानामधिपोऽपि यः सन्
दैवात् स्वयं निष्प्रजतां बिभर्ति।
विडम्बनेयं खलु जीवितेऽस्य
यां सूचयत्येष सुदीर्घशब्दः।।५९।।

प्रयुज्यमानं पदमन्यदत्र
भावं हि नोद्भावयितुं क्षमं स्यात्।
अमुं, ततो दीर्घतरप्रयोगे
मनोऽददात्स्वं कविकालिदासः।।६०।।

एषैव शक्तिः प्रतिभाप्रसूता
वाण्यां स्थिता हन्त महाकवीनाम्।
पदेषु तेषां परिवृत्त्यसह्य-
भावं समावेशयति प्रसह्य।।६१।।

एषोऽस्ति तेषां गिरि शब्दपाको
विचक्षणैर्यो निपुणं निरीक्ष्यः।
नैके ह्यनुक्ताः किल शब्दतोऽपि
भावास्ततः सुप्रकटा भवेयुः।।६२।।

दिशा नवीनेयमिति प्रबुध्य
विज्ञाय चास्या अतिसार्थकत्वम्।

---

१. प्रजाशब्दस्य जन इति च सन्ततिरिति चार्थद्वयम्। तथा चामरः—प्रजा स्यात् सन्ततौ जने।

वाग्योगवित्त्वं च तथा कवीनां
विभाव्य तद्दीप्रसरे मनोऽदाम्।। ६३।।

सङ्केतरूपेण मयोक्तमत्र
दिष्टा दिशैवात्र मया स्वबुद्ध्या।
दिशाऽनया कर्तुमनन्तकार्यं
शक्यं बुधाग्र्यैरतिसूक्ष्मदृग्भिः।। ६४।।

(मालिनीवृत्तम्)

इति समुदमुदारं स्वं वचः सम्प्रकल्प्य
नवनवपथपान्थो नम्रसत्यव्रतोऽहम्।
सकलविबुधलोकान् गोष्ठ्यलङ्कारभूतान्
प्रणतिततिभरेणाभ्यर्च्य मौनं भजामि।। ६५।।

मुम्बईस्थान् श्री चि० एस्० रावमहाभागान् प्रति २.७.२००३ दिनाङ्के प्रेषितं पत्रम्

माान्या विद्वद्वर्याः,
सादरं प्रणतयः।

(अनुष्टुब्वृत्तम्)

नाना दिनान्यतीतानि पत्रं प्राप्तवतो मम।
भवतां स्नेहसंयुक्तं मधुरं मधुराक्षरम्।।१।।

नापपारमितः पूर्वं प्रहेतुं यत्तदुत्तरम्।
अस्वास्थ्यं मे शरीरस्य सत्यं तत्रैति हेतुताम्।।२।।

त्रयो मासा व्यतीता मे सहमानस्य कोविदाः।
कण्ठोपरोधं प्रबलम् अशान्तिर्येन मे भृशम्।।३।।

द्राक्तरस्योपचारेण स्वास्थ्यलाभो मनाङ् मम।
आशासे दिवसैः कैश्चिन्नीरोगो भवितास्म्यहम्।।४।।

भवतां जीवनोदन्तो यत्सत्यं प्रेरणाप्रदः।
बहु कार्यं कृतं सद्भिर्भवद्भिर्यन्मुदे सताम्।।५।।

अक्षय्या भवतां कीर्तिर्लोकेषु प्रचरेदिति।
प्रार्थये पार्वतीजानिं वाचं स्वां चोपसंहरे।।६।।

भवदाश्रवः
सत्यव्रतः शास्त्री

दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति २.८.२००३ दिनाङ्के प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,

सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

भवद्ग्रन्थानवाप्याहं भवद्भिः प्रेषितान् मयि।
स्नेहोपहाररूपेण परमानन्दमाप्नवम्।।१।।

वाचयिष्यामि कालेन तान् ग्रन्थानिति मे मतिः।
भवत्कृतिषु या प्रौढिर्न सा ऽन्यत्रोपलक्ष्यते।।२।।

पल्लवग्राहि पाण्डित्यमद्यत्वे परिदृश्यते।
न शास्त्रमर्म जानन्ति जनाः पण्डितमानिनः।।३।।

आहिण्डमानाः सततमितश्चेतश्च भूतले।
नहि चेतो ददत्येते शास्त्रार्थग्रहणे मनाक्।।१४।।

स्थितिरेवेदृशी देशे किङ्कर्तव्यमिहाधुना।
कालचक्रपरीवर्तो हेतुतामत्र गच्छति।।५।।

भूयान् कालो व्यतीतोऽस्ति न सङ्गोऽभवदावयोः।
तदर्थं स्नेहसम्बन्धाच्चेत उत्कण्ठते ऽधुना।।६।।

सदा मङ्गलाभिलाषी

सत्यव्रतः

१५.९.२००३ दिनाङ्के वाराणसीस्थान् आचार्य शिवजी उपाध्यायमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या विद्वद्वर्याः,
सप्रणयं प्रणतयः।

(उपजातिवृत्तम्)

देशान्तरेषु व्यतियाप्य मासं
दिल्लीं निवृत्तो भवतामवापम्।
ग्रन्थद्वयं काव्यमयं निपाठं
निपाठमासीन्मम येन मोदः।। १ ।।

प्रसन्नगम्भीरपदा मनोज्ञा
गुम्फा गिरां काव्ययुगेऽहरन्मे।
मनो यतोऽहं विबुधाग्रगण्यान्
धन्यान्वदान्यान् भवतो वदामि।। २ ।।

गीर्वाणवाण्यैव निबन्धनीयो
लेखोऽस्ति चेत्तत्र भवेद्विलम्बः।
तत्राग्रहो मे नहि कश्चिदस्ति
यथा नियुक्तोऽस्मि तथा करोमि।। ३ ।।

कार्यान्तरेषु व्यतिषक्तचेताः
कालं लभे तद्रचनाय नालम्।
तत्कारणात्प्राग्रचितस्व-
लेखसम्प्रेषणेऽहं स्वमनो ददामि।। ४ ।।

प्रतीक्ष्य (=आदरणीय) वाचां भवतां प्रतीक्ष्य
वचः, प्रवत्स्यामि यथानिदेशम्।
इत्येव विद्वत्सु निवेद्य वाचं
वाचं स्वकीयामुपसंहरामि।।५।।

सुरसरस्वतीसमाराधनैकव्रतोऽहं
**सत्यव्रतः शास्त्री**

४.१०.२००३ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,

सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

संस्कृतस्यैव संमानः संमानो मे मतो मया।
यावज्जीवं मया दिव्या वागियं समुपासिता।।१।।

आयुःशेषोऽपि मयका वाचोऽस्याः समुपासने।
व्यतियापयितव्यः स्यात्तेन स्यात्सद्गतिर्मम।।२।।

इत्येतद् धृदये कृत्वा वर्षीयानप्यहं भृशम्।
कृशश्चाप्यथ कायेन समुपास इमां गिरम्।।३।।

भवन्तः सुखमेधन्तां परिवारेण संयुताः।
भगवन्तमिदं प्राथ्र्य वाचं स्वामुपसंहरे।।४।।

सदा भवन्मङ्गलाभिलाषी
सत्यव्रतः

९.१०.२००३ दिनाङ्के कालिकातास्थान् डा० रामजीवनाचार्यमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या विद्वद्वर्याः,
सादरं प्रणतयः।

(अनुष्टुब्वृत्तम्)

विजयायाः कृते प्रेम्णा प्रेषिताः शुभकामनाः।
ममान्तरङ्गे सुतरामानन्दं समजीजनन्।।१।।

भवन्तः शास्त्रमर्मज्ञा वागुपासनतत्पराः।
शुभं मे यदि वाञ्छन्ति नान्यद् वाञ्छ्यं भवेन्मम।।२।।

इति ममोद्गारा
भवत्स्नेहवशंवदस्य
सत्यव्रतशास्त्रिणः

### डा० ध्यानेशनारायणचक्रवर्तिमहाभागान् प्रति १०.१०.२००३ दिनाङ्के प्रेषितं पत्रम्

मान्येभ्यो नमो नमः।

(अनुष्टुब्वृत्तम्)

मम जन्मदिनार्थं याः सद्भिः सम्प्रेषिता मयि।
आशीर्वचोभराः सत्यं कृतार्थं मामचीकरन्।।१।।

(उपजातिवृत्तम्)

आशीर्वचोभिर्भवतामृषीणाम्
अर्थानुगैर्द्राक् सफलीकृतात्मा।
बद्धाञ्जलिः स्वां प्रणतिं भवद्भ्यो
निवेदयेऽहं कृतिनां वरेभ्यः।।२।।

तपोधनैर्गुण्यतमैर्भवद्भि-
र्विभाति भूमिर्न नरैरसङ्ख्यैः।
"नक्षत्रताराग्रहसङ्कुलाऽपि
ज्योतिष्मती चन्द्रमसैव रात्रिः"।।३।।

सदा भवन्तः सुखिनो भवन्तु
विन्दन्तु कीर्तिं च करावचेयाम्।
सम्प्रार्थयेऽहं प्रभुमेतदेव
देवाधिदेवं प्रणिपातपूर्वम्।।४।।

नवाम्बरे मासि पुनर्भवेन्नो
दिल्ल्यां प्रियः सङ्गम इत्यनेन।
आनन्दकोटिं परमां गतोऽहं
वाचं स्वकीयामुपसंहरामि।।५।।

भवद्गुणगणमुग्धः
सत्यव्रतः

## १९.१२.२००३ दिनाङ्के मलेरकोटलास्थान् प्रो० देवदत्तभट्टिमहाभागान् प्रति प्रेषितं पत्रम्

**प्रिया भट्टिमहाभागाः,**

**सस्नेहाशिषः**

(अनुष्टुब्वृत्तम्)

पत्रं सम्प्राप्तवानस्मि भवतां स्नेहसंयुतम्।
भवत्प्रणीतग्रन्थस्य भूमिका रचिता मया।।१।।

अकर्तुमन्यथा कर्तुं कर्तुं वा प्रभविष्णवः।
एनां सन्तो भवन्तोऽत्रेति मे सामासिकं वचः।।२।।

नातिस्वस्थोऽस्मि कायेन न चापि भवदम्बिका।
अपारं सोढमनया कष्टं वाचामगोचरम्।।३।।

वक्षःस्थले समुद्भूतः पिटको ऽतिभयङ्करः।
पिण्डाकृती रक्तवर्णः पीडां योऽजनयत् पराम्।।४।।

विना शल्यक्रियां तस्य नोपचारो भवेदिति।
शल्यक्रिया विशेषज्ञमतमासीत् सुनिश्चितम्।।५।।

अनुसृत्य तदेव द्राग् विलम्बं परिहृत्य च।
कष्टश्रितामिमां सर्वेऽनैष्म रुग्णालयं वयम्।।६।।

शल्यक्रियायां जातायां व्यपेतायां च तद्रुजि।
प्रत्यागताः स्वकं वेश्म स्थित्वा तत्र दिनत्रयम्।।७।।

रक्तस्रावो न रुद्धोऽस्ति यद्यप्यौषधसेवनात्।
तथाऽपि पीडापगमाच् चेतो नस्तुष्टिमश्नुते।।८।।

परश्वो ऽहं प्रहेतास्मि यन्मया लिखितं बुधाः!
इत्येवोक्त्वा समासेन वाचं स्वामुपसंहरे।।९।।

भवच्छिवानुध्यानपरायणोऽहं

सत्यव्रतः

२२.१२.२००३ दिनाङ्के मलेरकोटलास्थान् प्रो० देवदत्तभट्टिमहाभागान्
प्रति प्रेषितं पत्रम्

प्रिया भट्टिमहाभागाः,
सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

अद्यापराह्णे सम्प्राप्तं भवतां पत्रमुत्तमम्।
चित्ते मे येन सञ्जातो मोदो वाचामगोचरः।।१।।

पुरे चण्डीगृहे जातो मे प्रवासो दिनद्वयम्।
यतः प्रतिनिवृत्तोऽहं दिने सप्तदशे बुधाः!।।२।।

सप्ताहत्रितयात्पूर्वं नेत्रकष्टं ममाभवत्।
उपचारे नापयाति कृते बहुविधेऽपि यत्।।३।।

वामनेत्राज्जलस्रावोऽनारतं सम्प्रवर्तते।
पठने लेखने चैवासौविध्यं येन जायते।।४।।

सप्ताहद्वितयेनैव कष्टमेतद् व्यपैष्यति।
इत्येवमत्र भाषन्ते नेत्ररोगचिकित्सकाः।।५।।

औषधं नियतं सेवे तद्वचःप्रत्ययं दधत्।
आशासे लोकलोकेशः शङ्करः शङ्करिष्यति।।६।।

इत्येवोक्त्वा समासेन भवन्मङ्गलकामुकः।
सत्यव्रतोऽहं दिल्लीस्थो वाचं स्वामुपसंहरे।।७।।

भवत्सु स्निग्धः
सत्यव्रतः

२६.१२.२००३ दिनाङ्के मलेरकोटलास्थान् प्रो० देवदत्तभट्टिमहाभागान् प्रति प्रेषितं पत्रम्

(भुजङ्गप्रयातवृत्तम्)

मया प्रेषितं पूर्वपत्रं भवद्भिः
समासादितं स्यादितः पूर्वमेव।
इहत्यं समस्तं ततो ज्ञातमेव
भवेन्मातृसम्बद्धवृत्तं भवद्भिः।।१।।

अकस्मादमुष्या अहो! प्रादुरासी-
न्महत्कष्टजातं भृशं दुःखदायि।
विधेर्वैपरीत्याद् ग्रहाणां तथा चा-
प्यनिष्टानि कष्टानि[1] प्रादुर्भवन्ति।।२।।

यथा सर्पदंशस्तथा रोगदंश
उभावप्यमू दुश्चिकित्स्यौ मतौ स्तः।
कथञ्चित्पुनः सेवनेनौषधस्य
शमं विन्दतां तीव्रकष्टप्रदौ तौ।।३।।

ममाप्यस्ति कष्टं महन्नेत्रयोर्य-
द्वशान्मे मनोऽस्वस्थमास्ते नितान्तम्।
शरीरे रुजाक्रान्तिमाप्ते कथं स्यान्
मनःस्वास्थ्यम्, एते उभे सङ्गते स्तः।।४।।

---

१. हे प्रे वेति समाश्रित्य प्रयोगः।

उभावप्यहो! सम्प्रति प्राप्तरोगौ
कथञ्चित्स्वकं जीवितं यापयावः।
शरीरस्य सादेन दुःखाभिभूतौ
प्रपन्नौ प्रभुं लोकलोकेशम् आवाम्।।५।।

स्थितेऽप्येवमावां रतौ कर्मणि स्वः
स्वकीये विरामो मनस्यावयोर्न।
स्वकीयानि कर्माणि कुर्वन्त एव
जना जीवितुं कामयेरञ्जगत्याम्।।६।।

श्रुतिर्बाढमुद्धोषयत्येतदेव
तदेवाभ्युपेत्य प्रवृत्तौ भवावः।
सुखं तत्र शान्तिं च कामप्यपूर्वां
ततः प्राप्य कालं स्वकं यापयावः।।७।।

न सांसारिकीष्वस्ति तोषो जगत्यां
क्रियासु प्रमाणं स्थितं शास्त्रमत्र।
निवर्त्यं स्वकं चित्तमाभ्यस्ततः स्यात्
समस्तार्थसिद्धिर्नराणां जगत्याम्।।८।।

यदासीन्मया पूर्वमुक्तं स्वपत्रे
तदेव क्रियारूपमापाद्य सद्यः।
अनेन स्वकीयेन पत्रेण सत्रा
मया प्रेष्यते मत्प्रियेभ्यो भवद्भ्यः।।९।।

निबद्धा मया भूमिकाऽऽङ्ग्ल्यवाचा
न हिन्द्येति नात्रान्यथा चिन्तनीयम्।
यया वा कया वा भवेल्लेखबन्धो
गिरा तत्र दोषं न पश्यन्ति सन्तः।।१०।।

न वाण्यां विशेषेण कस्याञ्चनैव
प्रियत्वाद् दृढः कश्चिदस्त्याग्रहो मे।
क्षणे यत्र यस्याः समुन्मेषणं मे
भवेत्तत्र तामेव ताताश्रयामि।। ११।।

अतः कारणात्संश्रिताऽऽङ्गल्यवाणी
विदेशे च देशे च याऽति प्रसिद्धा।
जनाः कोटिशो वाचमेनां भजन्ते
तयोक्तं वचः सुग्रहं स्यान्नु तेषाम्।। १२।।
मया वाचितं ग्रन्थरत्नं भवद्भिः
प्रणीतं समास्वादितस्तद्रसश्च।
परिश्रान्तमत्रास्ति भूयो भवद्भिः
सुसूक्ष्मेक्षिकादृष्टतत्तत्त्वविद्भिः।। १३।।

महान् ज्ञानराशिर्हि वेदाभिधेयो
विदिर्ज्ञान इत्यर्थको धातुरत्र।
समस्तं जगत्यां हि यज्ज्ञानमास्ते
तदत्रैव बीजाकृति प्राप्यतेऽद्धा।। १४।।

अतो नातिचित्रं चिकित्सार्थमत्र
रुजां सूक्तसार्थस्य नानाविधानाम्।
विधानं तथा भेषजानामपूर्व-
गुणानां गुणज्ञानुसन्धानभाजाम्।। १५।।

चिकित्स्या अभूवंस्तदानीन्तनानां
क्षयाद्या रुजोऽपीति चित्रं विभाति।
महद् ज्ञानमासीत्तदानीन्तनानां
बुधानां गदानां निवृत्तौ जनानाम्।। १६।।

(उपजातिवृत्तं क्वचिदिन्द्रवज्रावृत्तं च)

न केवलं वृक्षवनस्पतिभ्यो
रोगास्तदानीमभवंश्चिकित्स्याः।
तदाऽग्निवाताम्बुसहस्ररश्मि-
मृद्भ्योऽप्यमीषामभवच्चिकित्सा।। १७।।

किञ्चाभवन्नौषधसेवनेन
रुजां चिकित्सा खलु केवलेन।
मन्त्रादिसम्यग्विनियोगपूर्वं
निषेवणीयं तदभूत्तदानीम्।। १८।।

मन्त्रेष्वपूर्वा किल शक्तिरस्ति
नात्रास्ति सन्देहलवावकाशः।
प्रमाणमत्रानुभवो ममैव
तदेव तावत्परमं प्रमाणम्।। १९।।

अधीतिनः शास्त्रचये विपश्चि-
दुद्धाः प्रमाणेषु चतुर्ष्वपीह।
प्रत्यक्षमेवाकलयन्ति मुख्यं
न तत्प्रमाणान्तरसव्यपेक्षम्।। २०।।

वर्षाण्यतीतानि भवेयुरेव
षष्टिस्ततो वाऽप्यधिकानि मन्ये।
वाराणसीमध्यवसं सुखेन
तत्र स्वकीयेऽध्ययने प्रवृत्तः।। २१।।

इच्छोदिता चेतसि मे तदानीं
द्रष्टुं स्थलं पुण्यतमं जगत्याम्।
श्रीबुद्धदेवाध्युषितं पुराणं
ख्यातं पुराणादिषु सारनाथम्।। २२।।

प्रचोदितः सन् बलवत्तयाऽहं
यानेन रिक्शेतिसमाह्वयेन।
सम्प्रस्थितो द्रष्टुमना अभूवं
नेत्रद्वयासेचनकं स्थलं तत्।। २३।।

पुरस्वरूपं न तदाऽऽस्त तस्य
न तत्र वेश्मानि न चापि रथ्याः।
अगारमेवास्त तु तत्र दीर्घं
विनिर्मितं प्राक्तनशासनेन।। २४।।

यत्राभवत्तन्निकटस्थलस्थो-
पलब्धवस्तुप्रकरप्रवेशः।
तेष्वेव वस्तुष्वभवत्तदानीं
स्वराष्ट्रचिह्नत्वरुचं दधानम्।। २५।।

धर्मप्रचाराय समस्तदिक्षु
प्रवर्तितं धर्मधुरन्धरेण।
सम्राड्वरेणामरकीर्तिभाजा
ऽशोकेन पुण्यं भुवि धर्मचक्रम्।। २६।।

सिंहत्रयीसन्मुकुटायमानं
सन्द्रष्टुमेत् कुतुकोपपन्नः।
तत्पृष्ठभागे सहजस्वभावात्
वामेतरं न्यास्थमहं स्वपाणिम्।। २७।।

स्वप्नेऽपि बोधो मम नाभवद्यत्
तत्रास्ति कोषो वरटाततीनाम्।
कृष्णाकृतीनां विषपूर्णदंश-
भयावहानां भृशदुःखदानाम्।। २८।।

संन्यस्तमात्रस्तु करो ममाऽऽसीद्
दष्टो हहा! हन्तुमिवोद्यताभिः।
परश्शताभिर्वरटाभिराशु
करालकालायससन्निभाभिः।। २९।।

तद्दंशजामार्तिमशक्नुवानः
सोढुं कुमारे वयसि स्थितोऽहम्।
चीत्कारमुच्चैर्व्यसृजं तदानीं
शुश्राव यं वाहनचालको मे।। ३०।।

श्रुत्वा तदुत्प्लुत्य तदोपपन्नः
कष्टश्रितं मामवलोक्य खिन्नः।
आकृष्य मां द्राक् करुणोपपन्नः
मा चिन्तितोऽभूरिति मां प्रपन्नः।। ३१।।

आदाय मार्गात्खलु रेणमुष्टि-
मवाकिरद्रेणुमसौ करे मे।
मन्त्रानकेनानुदचारयच्च
ये मे नहि श्रोत्रगता अभूवन्।। ३२।।

क्षणैस्तु तावत् कतिचिद्भिरेव
सर्वाऽपि पीडोपशमं गता मे।
दंशक्रियातः श्वयथुश्च जाता
ऽयासीद्विलोपं परिपश्यतो मे।। ३३।।

दृष्ट्वैतदासं बहु विस्मितोऽहं
पुरा न दृष्टं मयका तदासीत्।
तदाऽभवन्मे मनसो विचारो
विलक्षणेयं खलु मन्त्रशक्तिः।। ३४।।

अशिक्षितः सन्नपि यत्प्रभावाद्
रिक्शोपजीव्येष जनः समन्तात्।
उल्लाघतां मामनयद्यतोऽहं
पुनः स्वकीयां प्रकृतिं गतोऽस्मि।। ३५।।

यत्रास्त पूर्वं शतशोऽतितीक्ष्ण-
सूच्यग्रवेधेन समानरूपा।
पीडा न सा ऽलक्ष्यत लेशतोऽपि
किञ्चित्क्षणानन्तरमेव तत्र।। ३६।।

पाणौ पुनः केवलमास्त चिह्न-
परम्परा दंशकृता तदानीम्।
अतर्किताभापतितां विपत्तिं
याऽस्मारयन्मां विजने प्रदेशे।। ३८।।

(अनुष्टुब्वृत्तम्)

मन्त्रशक्तेः प्रभावस्य प्रस्तौम्यन्यामुदाहृतिम्।
विद्वज्जनविनोदाय या हि साक्षात्कृता मया।। ३८।।

बाल्यकाले कदाचिन्मां पीतरोगो ऽतिदुःखदः।
आक्रान्तवान् यतः कायः सुतरां क्षीणतां गतः।। ३९।।

नापायासीदयं रोगः सेवितेष्वौषधेष्वपि।
तद् दृष्ट्वा तातपादा मेऽभवन् चिन्तितचेतसः।। ४०।।
उपेयिवांस्तदानीं तान् कश्चित् परिचितो जनः।
चिन्तितांस्तानवोचच्च सैष सान्त्वकरं वचः।। ४१।।
अहं मन्त्रप्रयोगेण चिकित्सिष्यामि रोगकम्[1]।
कुशांस्तथा सुधाचूर्णं भवन्तः स्थापयन्त्विह।। ४२।।

---

१. कुत्सितं रोगम्। कुत्सायां कन्।

अभ्युपेत्य वचस्तस्य समस्तं संविधानकम्।
सम्पादितं तातपादैर्जलकुण्डं न्यधायि च।।४३।।

विशालकुण्डं न्यदधान्निकषा मां जनोऽपरम्।
मां चाप्यतिष्ठिपत्तत्र कर्तुं किञ्चिद्विलक्षणम्।।४४।।

जलमुद्धारमुद्धारं कुण्डात्पूर्वतनादयम्।
पश्यतां सर्वलोकानामक्षैप्सीत्तच्छनैर्मयि।।४५।।

मन्त्रोच्चारणपूर्वं च प्रौक्षीद् दर्भैः स मां मुहुः।
विहाय मां जले ऽपप्तत् पीतिमा यद्वशान्मम।।४६।।

क्षिप्तं क्षिप्तं जलं कुण्डे पीतं पीतमजायत।
यस्मिन्कुण्डे स्थितोऽभूवं पीतं तत्समदृश्यत।।४७।।

उल्लाघतां गतो ऽभूवं तद्विधेः परिपालनात्।
यावज्जीवं स रोगो मां नाक्रमीद् भृशदुःखदः।।४८।।

इत्थं मन्त्रप्रभावोऽयं स्वयं साक्षात्कृतो मया।
ये जनाः सन्दिहन्त्यत्र ते सम्यग्दर्शना नहि।।४९।।

दृढं वेदा आमनन्ति मन्त्रपाठसमन्वितम्।
तत्तद्रोगविनाशाय सम्यगौषधसेवनम्।।५०।।

प्रादुःष्यान्नैव शङ्काऽत्र मनसि प्रतिभावताम्।
श्रुतिप्रमाणकाः सत्यं वयं भारतवासिनः।।५१।।

वेदानन्वेषमन्वेषं सामग्री प्रस्तुता शुभा।
रोगोपचारसम्बद्धा देवदत्तेन भट्टिना।।५२।।

भूयोविद्यः प्रशस्योऽयं यशस्यश्च मतो मम।
येन शास्त्राण्यधीतानि शाणवत्तीक्ष्णया धिया।।५३।।

एतद्दिशायां यत्नोऽस्य प्रथमो मन्यते मया।
ग्रन्थो नैतादृशः पूर्वं दृष्टेर्मे विषयं गतः।।५४।।

प्रागेव काव्यक्षेत्रेऽयं लब्धकीर्तिर्विचक्षणः।
गताः प्रसिद्धिमेतस्य नैके सत्काव्यसङ्ग्रहाः।।५५।।

नूत्नां शैलीं समाश्रित्य रचिता रसनिर्भराः।
प्रशंसिताः सहृदयैः सत्काव्यनिकषायितैः।।५६।।

ग्रन्थेन प्रस्तुतेनान्यैस्तस्य ग्रन्थैश्च शोभनैः।
विमृष्टा विषया नाना सूक्ष्मयेक्षिकया सुखम्।।५७।।

कविः सहृदयश्चायमित्येषाऽस्य विशेषता।
स्वर्णस्य च सुगन्धस्य योगोऽस्मिन् दृश्यते शुभः।।५८।।

व्युत्पत्तिप्रतिभे अस्मिन्नुभे अपि समं स्थिते।
अल्पाश्रयत्वादन्यत्र ते एनं समुपाश्रिते।।५९।।

सत्काव्यनिर्मितौ गूढतत्त्वविश्लेषणे तथा।
समं लीलायते दिव्या देवदत्तस्य शेमुषी।।६०।।

(शार्दूलविक्रीडितवृत्तम्)

काव्यादे रचनाविधावनितरं नैपुण्यमासेदिवांस्
तत्तद्ग्रन्थसमीक्षणेन च यशः शुभ्रं शुभं लब्धवान्।
रम्याभिः कृतिभिः कृती सुकृतिनां मूर्धाभिषिक्तो भुवि
जीव्याद्वर्षशतं सुखेन वलितः श्रीदेवदत्तः सुधीः।।६१।।

इत्याशीः
तद्गुणगणावर्जितहृदयस्य
सत्यव्रतस्य शास्त्रिणः

२९.४.२००४ दिनाङ्के कुरुक्षेत्रस्थान् डा०रणवीरसिंहमहाभागान् प्रति प्रेषितं पत्रम्

प्रियाः प्रो० रणवीरसिंहमहाभागाः,

सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

इलाराजेशयोर्भव्यविवाहार्थं निमन्त्रणम्।
समासाद्य प्रमोदस्य परां कोटिमहं गतः॥ १॥

दिष्ट्या भवन्तो वर्धन्ते कन्यादानसुखोत्सवात्।
पुण्यानामुत्तमं पुण्यं शास्त्रेष्वेतन्निगद्यते॥ २॥

(उपजातिवृत्तम्)

कन्यावियोगः सुतरामसह्यो
मतस्तथापि प्रतिभाततत्त्वाः।
तां चिन्तयित्वा परकीयमर्थं
न स्वं विषादाय समर्पयन्ति॥ ३॥

गृहस्थधर्मं परिचालयन्ती
दृढं स्थितेलेव शुभे स्वमार्गे।
ऋद्ध्या समृद्ध्या च समेधमाना
नयेत्स्वमायुः परिलब्धमाना॥ ४॥

सङ्क्रीडमाना गुणिभिः स्वपुत्रै-
र्विवर्धमानेन्दुकलेव रम्या।
इत्येवमस्यै शुभभाग्यवत्यै
निजाशिषां राशिमहं प्रयुञ्जे॥ ५॥

शुभाकाङ्क्षी
सत्यव्रतः

### ३०.४.२००४ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतिततयः

(उपजातिवृत्तम्)

चिराय पत्रं भवदीयमाप्तमासीन्मया नोत्तरितं यतस्तत्।
खेदातिरेको मम मानसेऽस्ति क्षम्योऽस्म्यवश्यं सदयैर्भवद्भिः।।१।।

कार्येषु नैकेषु भृशं प्रसक्तिः क्षणं ददाति क्षणमप्यतो मे।
विदूयते चित्तमिति प्रसह्य वाचो मुखान्मे खलु निःसरन्ति।।२।।

ग्रन्था अनेके मयका प्रणेया निबन्धजातं च निबन्धनीयम्।
देशा अनेके गमिकर्मतां च नेया इति व्याकुलितोऽस्मि सत्यम्।।३।।

तथापि कार्येष्वनवग्रहग्रहो ऽहं व्यापारयाम्येव, न मेऽस्ति मुक्तिः।
अवश्यकार्याणि मयैव कार्याण्यतो ऽस्ति मे तत्र दृढोऽभियोगः।।४।।

न मेऽस्ति कालो बहुरित्यतोऽहं पूर्णत्वमापादयितुं स्वकीयाः।
कृतीरपूर्णा अनिशं प्रयत्नमाधातुमस्मि प्रबलप्रतिज्ञः।।५।।

विद्वज्जनानां[१]शिषमत्र याचे सत्यव्रतः स्यामहमर्थतोऽपि।
साहित्यसेवानिरतश्च कालं स्वं यापयेयं विबुधप्रसादात्।।६।।

विद्वद्वरेण्येषु भवत्सु सत्सु कविप्रवेकेषु विसृज्य वाचम्।
एतामहं स्वां महसां चयेषु पत्रं स्वकं पर्यवसाययामि।।७।।

विदुषामाश्रवः
सत्यव्रतशास्त्री

---

१. अकथितं च (१.४.५१) इत्यनेनात्र कर्मत्वे द्वितीया।

## ३.७.२००४ दिनाङ्के रामपुरस्थान् डा०नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

मान्याः,

सप्रणयं प्रणतयः

(उपजातीन्द्रवज्रोपेन्द्रवज्रावृत्तानि)

पत्रं समासाद्य मुदां भरो यः
परेद्यवि प्रादुरभून्न वाचा।
शक्यो मया वर्णयितुं कथञ्चि-
न्मोदो हृदो वैखरितां न याति।। १।।

प्रकाशकानां विषये यदुक्तं
सद्भिर्भवद्भिर्नहि तन्मृषोद्यम्।[1]
एषां प्रवृत्तिः क्रकचेन तुल्या
सुधीमनोदारणसम्प्रवृत्ता।। २।।

प्रवञ्चितोऽनेकश एभिरस्मि
पयोमुखैर्हा! विषकुम्भरूपैः।
ऋजूनिमे शास्त्रचणान् बुधाग्र्यान्
परातिसन्धानपरास्तुदन्ति।। ३।।

दिवानिशं ये श्रममाचरन्ति
तेषां निरस्यैकपदे श्रमं ते।
तेभ्यः प्रयच्छन्ति न किञ्चिदेव
स्वं सर्वमेव स्ववशं नयन्तः।। ४।।

---

१. वदः सुपि क्यप् च (३.१.१०६) इत्यनेन क्यप्।

यच्छन्ति ते चेदणुमात्रकं य
च्छाकाय वा तल्लवणाय वा च।
एवंविधां वृत्तिमुपाश्रितास्ते
स्वं भाव्यनिष्टं नहि चिन्तयन्ति।।५।।

एवं प्रवृत्ते ह्यधरोत्तरे ऽत्र
किं वा क्रियेताथ न वा क्रियेत।
इत्येव चिन्ताकुलितान्तरात्मा
न शान्तिमाप्नोति सुधीजनौघः।।६।।

प्रकाशने ग्रन्थवरस्य यद्य-
प्यास्तेऽनुदानं सुलभं तथापि।
विक्रेत्रधीनं परिलक्ष्य तस्य
न विक्रयायोत्सहते विपश्चित्।।७।।

एवं स्थितिस्तस्य विचित्ररूपा
त्रिशङ्कुवद् कष्टकरा निकामम्।
ग्रन्थो निबद्धो महता श्रमेणा-
प्रकाशितस्तिष्ठति तस्य पार्श्वे।।८।।

विमूढचेता नहि बुध्यतेऽसौ
प्राकाश्यमेयात्कथमेष शीघ्रम्।
ग्रन्थः प्रणीतो महता श्रमेण
विद्वत्कराग्रप्रणयं प्रयायात्।।९।।

ग्रन्थप्रणेतुः सहजेयमिच्छा
यद् ग्रन्थमस्याकलयन्तु विज्ञाः।
सूक्ष्मं विविञ्चन्तु तथैनमेते
यत्नं कवित्वं च नयन्तु तस्य।।१०।।

विद्वत्प्रवेकप्रणयादृते नो
विपश्चितां किञ्चिदभीष्टमस्ति।

तेषु प्रसन्नेषु भवेत्प्रसत्ति-
ग्रन्थस्य कर्तुः श्रमकर्शितस्य।। ११ ।।
प्रशस्यते चेत्कृतिरस्य शस्यै-
र्विद्वद्वराणां धुरि कीर्तनीयैः।
स्वजन्मसाफल्यमवैति ग्रन्थ-
कर्ता, ततो नो प्रियमस्ति तस्य।। १२ ।।

सर्वस्य लोकस्य यशःप्रकृष्टि-
र्लोकेऽस्त्यभीष्टेति विचार्य कृष्टिः।[1]
समीहते स्वस्य यशःप्रकर्षं
कृत्या स्वयेत्यत्र मनाङ् न चित्रम्।। १३ ।।

विनिर्मितं पञ्चभिरत्र तत्त्वैः
शरीरमेतत् क्षयतां प्रयाति।
पुण्यार्जितं नाम यशःशरीरं
नैति क्षयं ह्रासमुपैति चापि।। १४ ।।

श्रीव्यासवाल्मीकिप्रभृत्यनेके
बुधाः शरीरेण न सन्ति लोके।
विलक्षणाभिः कृतिभिस्तु ते हि
तिष्ठन्ति सम्प्रत्यपि जीवलोके।। १५ ।।

तेषां विचित्रप्रतिभान्वितानां
लोके प्रशस्ताः कृतयः शरीरम्।
तेनैव जीवन्ति शरीररूपे-
णैते विपश्चित्प्रवरा जगत्याम्।। १६ ।।

---

१. विद्वानित्यर्थः।
२. प्रशंसायां रूपप्, शरीररूपेण=प्रशस्तेन शरीरेण।

स्थिता अतिक्रम्य हि देशकाल-
सीमादिकं ते यशसा प्रकाशाः।
श्रुतप्रकाशेन दिगन्तराणि
प्रकाशयन्त्येवमनन्तकालम्।। १७।।

एभिः प्रशस्यैर्विबुधप्रवेकै
राराज्यते भूरुडुपैरिव द्यौः।
विकस्वरैः पुष्करिणीव पद्मैः
सुगन्धिपुष्पैरिव पादपाली।। १८।।

एते नमस्या वरिवस्यया च
समर्चनीयाः प्रणतेन मूर्ध्ना।
सदा नवोन्मेषयुताग्र्यशेमु-
ष्यालिङ्गिताः सूक्ष्मदृशो बुधाग्र्याः।। १९।।

यद्यप्यनेके भुवि सन्ति कीटा-
श्चरन्ति वाऽनेकविधाः पतङ्गाः।
सुगन्धिपुष्पप्रकरस्य नैते
मरन्दमादातुमलं कथञ्चित्।। २०।।

तत्र क्षमाः केवलमेव भृङ्गा
एवं पतन्तीषु च मक्षिकासु।
नैकासु, शक्तिर्मधुमक्षिकाणाम्
एवाति रुच्ये मधुसञ्चयेऽस्ति!।। २१।।

अस्मास्वसङ्ख्येष्वपि मानवेषु
भूभारभूतेषु मृदां चयेषु।
शास्त्रावबोधक्षमताऽस्ति केषु-
चिदेव सत्यं कृतिनां वरेषु।। २२।।

प्राग्जन्मसंस्कारवशादथो च
प्रभुप्रसादात् सुकृतार्ज्जिताच्च।
एषोपलभ्येत विचित्ररूपा
या लोकलोकेषु समर्च्चिताऽस्ति।। २३।।

निसर्गजाता प्रतिभेति कैश्चित्[1]
शक्तिस्तथान्यैः समुदीरितेयम्।
काव्योद्भवे हेतुरथापि शास्त्र-
गूढाभिसन्धिग्रहणे निमित्तम्।। २४।।

(अनुष्टुब्वृत्तम्)

इत्येवोक्त्वा समासेन प्रणामं स्वं निवेद्य च।
शास्त्री सत्यव्रताख्योऽहं वाचं स्वामुपसंहरे।। २५।।

भवदाश्रवः
सत्यव्रतः शास्त्री

---

१. दण्डिन उक्तिः–नैसर्गिकी च प्रतिभा।

६.७.२००४ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

(उपजातिवृत्तम्)

नारायणाख्यान् विबुधाग्रगण्यान्
महाजनान् काङ्करवंशजातान्।
सत्यव्रतो दिल्लिपुराधिवासी
प्रणामपुष्पैरहमर्चयामि।। १।।

विद्वत्समर्चा दशमे ऽह्नि मास-
स्यायोजिता मे मुदमातनोति।
गिरः सुराणामियमद्भुतैव
सेवेति निर्मायमिहास्ति मे वाक्।। २।।

द्विवेदिवंश्या विबुधावतंसा
गङ्गाधरा मद्वचसा प्रणम्याः।
वर्धापनीयाश्च सतां वरेण्या
संयोजनीयाः स्तुतिवाग्भरैश्च।। ३।।

अहर्निशं शास्त्रचये प्रसक्ता
भक्ताः प्रभोः साधुजनानुरक्ताः।
कृत्येषु शुभ्रेषु सदाऽनुषक्ता
जयन्ति गङ्गाधरनामधेयाः।। ४।।

विद्वत्समर्चाकृतिषु प्रसक्ता
धन्या भवन्तः कृतिनां वरिष्ठाः।
बुधेन्द्रवृन्दारकपादपूजा
तनोति कल्याणमपूर्वमेव।। ५।।

विद्वत्समर्चा क्वचिदेव लोके
विलोक्यते, यद्यपि लोकवादः।
पूजा स्वदेशे नृपतेः पुनस्तु
सर्वत्र विद्वत्प्रवरस्य साऽस्ति।।६।।

आलोक्यते सम्प्रति वैपरीत्यं
कालस्य तावद्विपरीतभावात्।
विद्वत्प्रवेका अपि नैव मान-
मपेक्षितं सम्प्रति संलभन्ते।।७।।

उच्चैःपदस्थास्तु विवेकशून्याः
सत्कारभाजो भुवि बोभवन्ति।
उपेक्षिताश्चापि भवन्त्यनेके
शास्त्राटवीसञ्चरणप्रसक्ताः।।८।।

मुखेषु तेषां हि विवर्णभाव-
मनेकशोऽहं परिलक्षयामि।
यल्लक्षयित्वा मृदु मानसं मे
सह्येतरं खेदभरं बिभर्ति।।९।।

कथेयमास्ताम्, अधुना मनो मे
विपश्चितां मानवशात् प्रसन्नम्।
श्रेष्ठस्य कार्यस्य कृते प्रभूत-
सम्भावनाभिर्भवतोऽर्चयामि।।१०।।

भवदभिन्नहृदयः
सत्यव्रतशास्त्री

नीलोखेड़ीस्थान् श्री जयनारायणशास्त्रिमहाभागान् प्रति ८.७.२००४ दिनाङ्के प्रेषितं पत्रम्

मान्या विद्वद्वरेण्या,
जयतु भारती।

(उपजातिवृत्तम्)

अद्यापराह्ने प्रहितानि सद्भिः
पत्रेण सत्रा दश पुस्तकानि।
सम्प्राप्य यो मोदभरो ममाभूद्
न वाग्भरैर्व्यञ्जयितुं स शक्यः।। १।।

कालेन सर्वाण्यनुशील्य तानि
विमर्शमापाद्य च विस्तरेण।
निबन्धमेकं रचयेयमाशु
मनोरथोऽयं प्रबलो ममास्ति।। २।।

हर्याणदेशीयबुधप्रवेका-
नाश्रित्य तेषां च कृतीः सुरम्याः।
कालाद्बहोः सूक्ष्मविचारचर्चा
श्रमेण मे वर्वृतति प्रभूता।। ३।।

दिल्लीपुरे मे वसतिर्यतोऽस्ति
तस्मान् न हर्याणबुधाननेकान्।
प्रत्यक्षतो वाऽथ परोक्षतो वा
जानाम्यहं यत्नमुपाश्रितोऽपि।। ४।।

यैः कैरपि प्राग्रहरैर्बुधेषु
हर्याणदेश्यैर्मम संस्तवोऽस्ति।

सम्प्रार्थये तान् विनयावनम्रो
यत्ते ऽपरान् संस्कृतवागभिज्ञान्।।५।।

अज्ञानिनं मां परिचाययन्तु
विमर्शने स्यामभियुक्त आशु।
तेषां कृतीनां रुचिराकृतीनां
याः कोविदग्र्यैः कृतिभिः कृताः स्युः।।६।।

साहाय्ययोगं भवतामपीह
कर्मण्यहं प्रार्थय आदरेण।
स्वग्रन्थपूगप्रहितैः कृते च
कृतज्ञतां स्वां प्रकटीकरोमि।।७।।

भवत्सु स्निग्धः
सत्यव्रतशास्त्री

६.८.२००४ दिनाङ्के वाराणसेयान् डा० अमरनाथपाण्डेयमहाभागान्
प्रति प्रेषितं पत्रम्

**मान्या विद्वद्वर्या,**
जयतु भारती

(अनुष्टुब्वृत्तम्)

पत्रमासीषदं रुच्यं भवतां रुचिराक्षरम्।
यत्प्राप्तमात्रं चित्तस्य मम मोदमवीवृधत्।। १।।

(शार्दूलविक्रीडितवृत्तम्)

एकारान्तपदप्रयोगविधिना पत्रावसानेऽरुचि-
र्या प्रादर्शि भवद्भिरत्र नहि मे हेतुः समुन्मीलति।
एतस्माद् भवतो बुधाननुरुणध्म्यात्मावबोधाय मे
दोषज्ञा अनवद्यबन्धनिपुणा दोषं समाख्यान्त्विह।। २।।

हृञ्धातुर्हरणार्थकः पदकृतामिष्टोऽस्ति भौवादिक
एतस्मादुपसंहरे[1] इति पदं दुष्टं कथं सम्भवेत्।
ञित्वात्तस्य पदद्वयेऽपि न भवेद् दोषः प्रयोगे क्वचित्
तत्कथ्यं, भवतां प्रयोगविषये वैशारदी विश्रुता।। ३।।

भवच्छुभेप्सुः
सत्यव्रतशास्त्री

---

१. निदर्शनार्थं सन्धिपरिहारः।

१०.८.२००४ दिनाङ्के एडमण्टन ( कनाडा )स्थान् श्रीहरिपालसिंहरावमहाभागान्
प्रति प्रेषितं पत्रम्

मान्या भ्रातृवर्याः,
सप्रश्रयं वन्दे

(मालिनीवृत्तम्)

कतिपयदिनपूर्वं पत्रमासाद्य हृद्यं
भवदमलकरेण न्यस्तवर्णं वरेण्यम्।
अतुलितमुदमापं दूरसंस्थोऽहमार्याः!
चिरविरहितजनवृत्तं चित्तशान्तिं ददाति।।१।।

अधिवसति कनाडानामकं भ्रातृवर्यो
विपुलविभवयुक्तं नेत्रयुग्मोत्सवं च।
रुचिरप्रकृतिनट्याः क्रीडनस्थानभूतं
यदपि न भवतस्तद्देश आत्मीयता अस्ति।।२।।

जनिरजनि मनोज्ञे भारते नाम देशे
जननभुवि ततः स्याच्छ्रीमतो ऽत्रानुरागः।
सकलजगति लोको देश आत्मीय एव
सुखममितमवाप्नोत्यत्र नो संशयो ऽस्ति।।३।।

अहमपि बहुशोऽगामन्यदेशान्पृथिव्यां
बहुतिथसमयं चायापयं तत्र कार्यात्।
क्षणमपि नहि चाभूद्विस्मृतिर्भारतस्य
निजजननभुवो मे तत्र बद्धादरस्य।।४।।

अशिथिलितमनुरागं तत्र वोऽस्तीति मे धी-
रत इममुपगन्तुं जायते चेतसीच्छा।
इति किमपि विचित्रं नैव पश्यामि बन्धो!
जननभुवि समेषां बद्धमूलोऽनुरागः।।५।।

द्विजगण इव मेघं चातको वाऽब्दबिन्दून्
भवदभिगममत्र प्रार्थये पार्वतीशम्।
परमसुखकरो मे सङ्गमो बन्धुवर्यै-
र्नहि किमपि ततो मे वाञ्छनीयं समस्ति।।६।।

सुतदुहितृसमेताः पौत्रपौत्रीयुताश्च
प्रभुचरणयुगे च ध्यानवन्तोऽप्रमादम्।
अतिसुखभरभरिताः शास्त्रचिन्ताप्रसक्ता
रसमयसमयौघं यापयेयुर्भवन्तः।।७।।

इति शुभाशंसा
भवदनुरक्तस्य
सत्यव्रतस्य

डा० रामकिशोरमिश्रान् खेकड़ास्थान् प्रति १९.८.२००४ दिनाङ्के प्रेषितं पत्रम्

मान्या महाकवयः,
सुरभारती विजयतेतराम्।

(गीतिवृत्तम्)

साहित्यसुरभिनामा ऽधिगतो ग्रन्थो मया ऽद्यैव।
हर्षप्रकर्षवर्षो यमधिगत्याभवदन्तरङ्गे मे।।१।।

रुचिरः पदविन्यासः सहृदयहृदयहारिणी च शैल्यस्य।
सर्वानपि काव्यज्ञान् रसभरनिर्भरचेतसस्सन्तनुते।।२।।

कविकर्मसुविज्ञाः सततं सुरगीःसेवने सक्ताः।
धन्याः सन्तो मान्याः करावचेयामितकीर्तिमन्तः।।३।।

इति सम्प्रार्थ्य भवेशं करुणावरुणालयं विनतः।
सत्यव्रतो हितैषी विरमति गुणगणग्रहणाग्रहग्रहिलः।।४।।

२४.४.२००४ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान्
प्रति प्रेषितं पत्रम्

मान्येषु विलसन्तु नतिततयः।

(उपजातिवृत्तम्)

अवाप्य पत्रं भवतां मनोज्ञं
भव्यार्थविन्यासविलासयुक्तम्।
आनन्दधारास्नपितो नवीनां
स्फूर्तिं समासाद्य कृती भवामि।। १।।

स्वल्पक्षणान् यन्मम सङ्गमोऽभूत्
सद्भिर्भवद्भिः क्षण एव सोऽभात्।
ममेति सत्यं हृदयात्समुत्था
वाचो मदीया इह निःसरन्ति।। २।।

कवीन्द्रवृन्दारकवृन्दवन्द्याः
सन्तो भवन्तो जगतीतलेऽत्र।
सत्यं भवद्दर्शनमेव पुण्यं
सम्भाषणादेस्तु कथैव काऽस्ति।। ३।।

अध्यासितं शास्त्रचये नदीष्णै-
र्भवद्भिरर्हद्भिरुदारसत्त्वैः।
तीर्थं हि सत्यं भवदीयवेश्म
ममेति निर्मायमहं ब्रवीमि।। ४।।

यन्नापपारं तदुपैतुमेतत्
चित्ते विषादो मम तेन भूयात्।
कालान्तरे ऽहं ध्रुवमेव तत्रा-
यास्यामि, सङ्कल्पमिमं व्यनज्मि।। ५।।

कार्याणि कार्याणि मयैकलेन
नानेति न स्वस्थमना भवामि।
अवश्यकृत्यान्यपि तेन कृत्या-
न्यनेकधा मे विलयं प्रयान्ति।।६।।

श्राम्यामि रात्रिन्दिवमस्ततन्द्रो
न यामि कृत्यस्य विधेश्च पारम्।
तच्चिन्तनाचान्तमना मनाङ् नो
विन्दामि सन्तोषसुखं कथञ्चित्।।७।।

ग्रन्था अनेके मयका प्रणेयाः
कालावधौ निश्चित एव विज्ञाः।
अत्यन्तविग्नोऽस्मि ततोऽत्र भूयः
शरीरशक्तेरधिकः श्रमो मे।।८।।

शरीरसादः प्रविवर्धतेऽत-
स्तेजोहरो यः सकलेन्द्रियाणाम्।
हते तु तेजस्यनुवर्तते ऽद्धा
क्लेशस्य मूलं मनसोऽवसादः।।९।।

प्रकाशका मामुपयन्ति नैके
तन्वन्ति सम्पर्कमनेकसंस्थाः।
प्रचोदयन्ति प्रबलं च मां त-
त्तद्ग्रन्थजातस्य निबन्धनाय।।१०।।

तैस्ताभिरेवं प्रबलं प्रणुन्नो
ऽपि नो मनाक् तद्वच आद्रियेऽहम्।
आयाससाध्ये नहि कृत्यजाते
व्यापारणायास्ति ममाभिलाषः।।११।।

जिजीविषा मे सुखमस्ति कञ्चित्
कालं यथेच्छस्थितिकस्य विज्ञाः!
सङ्क्रीडमानस्तनयेन नप्त्रा
स्वबन्धुवर्गेण च मत्प्रियेण।। १२।।

कालो मदीयो यदि याति तेन
प्रभोश्च भक्त्या जगदीश्वरस्य।
स्वं जीवितं धन्यमहं हि मंस्ये
नातः परं किञ्चिदभीप्सितं मे।। १३।।

मनोगतं भावमिमं स्वकीय-
मात्मस्वरूपेषु भवत्सु सम्यक्।
निवेद्य बाढं विशदान्तरात्मा
गिरं स्वकीयामुपसंहरामि।। १४।।

विनीतोऽहं
सत्यव्रतः शास्त्री

हैदराबादस्थान् श्री चि. एस. राव महाभागान् प्रति ११.९.२००४ दिनाङ्के प्रेषितं पत्रम्

मान्याः,

सादरं प्रणतयः।

(उपजातिवृत्तम्)

दिनान्यनेकानि गतानि पत्रं
सम्प्रापि यत्प्रेषितमास्त सद्भिः।
पद्यैर्निबद्धं रुचिरार्थहृद्य-
मवर्णमुक्तं[१] बहुवर्णयुक्तम्।। १ ।।

चेतोऽवसादो मम कश्चनास्ति
यदुत्तरं तस्य मया न दत्तम्।
आत्मानमागस्कृतमत्र मन्ये
स्वमेव भूयोऽत्र तिरस्करोमि।। २ ।।

नानाविधे कार्यविधौ प्रसक्तो
नाप्नोम्यहं कालकलां कथञ्चित्।
अवश्यकृत्यार्थमपीति खेदो
ममान्तरङ्गं सुतरां दुनोति।। ३ ।।

प्रतिक्षणं कार्यभरे गभीरे
व्यापारयामि स्वमहं क्षणं च।
लभे मनाङ् नो क्षणमेतदेव
कष्टं ममास्ते वचसामगम्यम्।। ४ ।।

१. अवर्ण इति निन्दा। तथाहि रघौ कालिदासः-न चावदद् भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि (१४.१७)।

काव्यक्रियायां नितरां प्रसक्ताः
कविप्रवेकै रचिता अनेकाः।
कृतीः पठित्वा मुदिताः प्रकामं
धन्या भवन्तो भुवनावतंसाः।।५।।

इति शुभाशंसा
सत्यव्रतशास्त्रिणः

**हैदराबादस्थान् श्री चि. एस. राव महाभागान् प्रति ११.९.२००४ दिनाङ्के प्रेषितं पत्रम्**

**मान्याः,**

**सादरं प्रणतयः।**

(उपजातिवृत्तम्)

दिनान्यनेकानि गतानि पत्रं
सम्प्रापि यत्प्रेषितमास्त सद्भिः।
पद्यैर्निबद्धं रुचिरार्थहृद्य-
मवर्णमुक्तं[१] बहुवर्णयुक्तम्।। १।।

चेतोऽवसादो मम कश्चनास्ति
यदुत्तरं तस्य मया न दत्तम्।
आत्मानमागस्कृतमत्र मन्ये
स्वमेव भूयोऽत्र तिरस्करोमि।। २।।

नानाविधे कार्यविधौ प्रसक्तो
नाप्नोम्यहं कालकलां कथञ्चित्।
अवश्यकृत्यार्थमपीति खेदो
ममान्तरङ्गं सुतरां दुनोति।। ३।।

प्रतिक्षणं कार्यभरे गभीरे
व्यापारयामि स्वमहं क्षणं च।
लभे मनाङ् नो क्षणमेतदेव
कष्टं ममास्ते वचसामगम्यम्।। ४।।

---

१. अवर्ण इति निन्दा। तथाहि रघौ कालिदासः-न चावदद् भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि (१४.१७)।

काव्यक्रियायां नितरां प्रसक्ताः
कविप्रवेकै रचिता अनेकाः।
कृतीः पठित्वा मुदिताः प्रकामं
धन्या भवन्तो भुवनावतंसाः।।५।।

इति शुभाशंसा
सत्यव्रतशास्त्रिणः

१६.९.२००४ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,

सस्नेहाशिषः।

(शार्दूलविक्रीडितवृत्तम्)

अत्यन्ताय ममास्ति तत्रभवतां पत्रस्य लाभो मुदे
भूयिष्ठं भवतां कृते मम मनः स्नेहोत्तरङ्गायितम्।
प्रायोऽहं भवतः[1] स्मरामि विविधान् वैदुष्यमुग्धो गुणान्
विद्वद्भिः सह चर्चयामि मुदितस्तांश्च प्रमाणैः सताम्।। १।।

अद्यत्वे विरला लसन्ति विबुधाः शास्त्रादिचर्चापराः
प्रायो गच्छति धीमतामपि महान् कालो मुधाऽऽसक्तिभिः।
न ग्रन्थान् रचयन्ति ते नहि च वाऽभ्यस्यन्ति शास्त्राणि ते
कालं ते गमयन्त्यहो! बहुतिथं कार्यान्तरव्यापृताः।। २।।

प्रायोऽहं प्रविलोकये बुधजने सौहार्दहार्दं नहि
नान्योन्येन विचारसारसरणिः सङ्गच्छते[2] तस्य च।
ईर्ष्याद्वेषवशंवदः परगुणान् बिल्वोपमेयानपि
कृत्वा सर्षपसंमितान् स्वलघुतामाविष्करोत्येव सः।। ३।।

देशोऽयं महितः सुमहतामावासभूमिः शुभो
नानातीर्थजलान्यमुष्य सततं नीराजनां तन्वते।
पाथोधिः स्वपयोभिरेनमनिशं प्रक्षालयत्युन्नतम्
एवं सत्यपि मानसी मलिनता नैतज्जनान् मुञ्चति।। ४।।

---

१. अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेन षष्ठी।

२. समो गम्यृच्छिभ्याम् (१.३.२९) इत्यनेनात्मनेपदम्।

किं स्यात्कारणमत्र नैव बहुशः सञ्चिन्तयन्नप्यह-
मुन्नेतुं प्रभवामि वेद्मि नहि चोपायं हि तद्वारणे।
सौहार्दातिशयो जनेषु न कुतो धत्ते पदं सौख्यदो
देशेऽत्रेति महान्तमावहति मे क्लेशं गिरोऽगोचरम्।। ३।।

लोके संस्कृतसंस्कृती[1] अभिमते अन्योन्यनित्याश्रये
सत्येवं समुपासकः सुरगिरः किं लक्ष्यतेऽसंस्कृतः?
कौटिल्यं परवञ्चना ऽनृतगवीगुम्फे प्रवृत्तिः पर-
च्छिद्रान्वेषणशीलता च बहुशस्तस्मिन् समालोक्यते।। ७।।

वेदव्याकरणादिशास्त्रनिचये कृत्वाऽपि भूयः श्रमं
स्मृत्यादीन् परिशील्य काव्यनिकरे दत्त्वा च बुद्धिं निजाम्।
कृत्याकृत्यविचारणाविमुखतां विद्वद्वराणामपि
दर्शं दर्शम[2]हं मनाक् क्षणमपि प्राप्नोमि नैव क्षणम्।। ८।।

उद्वेगो मनसो मया प्रकटितः पत्रेऽत्र संक्षेपतो
नान्यत्रेममहं प्रभुः कथयितुं लोकोऽन्यथा चिन्तयेत्।
वृद्धोऽयं जरसा ऽऽकुलेन्द्रिय इति प्राक्कालिको वाऽप्यह-
मित्येवं मम चिन्तनं प्रति भवेद् दृष्टिस्तदीया ननु।। ९।।

स्वं भावं प्रकटीकरोमि पुरतः कस्याप्यहं नो, भवान्
यस्मान्मे हृदयं द्वितीयमिति मे वागीदृशी निर्गता।
उद्गच्छन्ति यथा तरङ्गनिचया वारांनिधेर्मध्यत
एवं मे हृदयाम्बुधेर्विचलिताद्भावोर्मयः प्रोद्गताः।। ९।।

सम्मानार्थकृते भवद्भिरिह या वर्धापनाः प्रेषिताः
कार्तज्ञ्यं मम तत्कृते ननु कथं प्रादुर्भवेद्वाचिकम्।

---

१. ईदूदेद् द्विवचनं प्रगृह्यम् (१.१.११) इत्यनेन प्रगृह्यसञ्ज्ञायां प्लुतप्रगृह्या अचि नित्यम् (६.१.१२५) इत्यनेन प्रकृतिभावः।

२. आभीक्ष्ण्ये णमुल् च (३.४.२२) इति सूत्रेण णमुल्।

प्रागुक्तं हृदयं द्वितीयमिति यत्सत्यापयन्[1] सन् कथम्
आत्मानं नु कृतज्ञताभरभराक्रान्तं विदध्यामहम्?।। १०।।

दीर्घायुर्भवतां भवेत् प्रसृमरा कुन्दावदाता शुभा
कीर्तिर्दिक्षु विदिक्षु चापि सततं हस्तावचेया भवेत्।
हर्षश्चतेसि चञ्चलत्वविमुखे बुद्धौ च वैशारदी
काव्यानां रचनाविधौ च भवताच्छार्दूलविक्रीडितम्।। ११।।

(अनुष्टुब्वृत्तम्)

इत्येतामाशिषं सत्सु प्रयुज्यात्रभवत्स्वहम्।
भवद्गुणगणाकृष्टो वाचं स्वामुपसंहरे।। १२।।

भवच्छुभाभिलाषुकोऽहं
सत्यव्रतः

---

१. सत्यापपाशरूपवीणेत्यादिसूत्रेण (३.१.२५) णिच्।

## ३०.९.२००४ दिनाङ्के खेकड़ास्थान् डा०रामकिशोरमिश्रमहाभागान् प्रति प्रेषितं पत्रम्

मान्या महाकवयः,

जयतु भारती।

(उपजातिवृत्तम्)

नाट्यश्रुतिग्रन्थमवाप्य मोदो
ममान्तरङ्गे सुतरां प्रजातः।
आमूलचूलं परिशील्य तं द्राग्
भावं स्वकं वर्णयितास्मि विज्ञाः!।।१।।

सन्तो भवन्तः कविकर्मधुर्या
कृता अनेकाः कृतयो भवद्भिः।
याभ्योऽवदातः प्रथितः पृथिव्यां
यशःकदम्बो भवतां मनोज्ञः।।२।।

सारस्वते कर्मणि सम्प्रसक्ताः
सदा प्रभुध्यानपरायणाश्च।
रोगादिमुक्ता विषयेष्वसक्ता
दीर्घायुरद्धा[1]ऽश्नुवतां भवन्तः।।३।।

इति शुभाशंसाऽद्य स्वपञ्चसप्ततितमे जन्मदिवसे सरस्वतीसमा-
राधनैकव्रतस्य सत्यव्रतस्य शास्त्रिणः।।४।।

---

१. अद्धा =निश्चयेन

## ६.१०.२००४ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतिततयः।

(अनुष्टुब्वृत्तम्)

दूरभाषेण सन्देशं यदाऽऽपं भवतामहम्।
ततो दिनद्वयेनैव गन्तव्यं मयकाऽभवत्।।१।।

हरिद्वारपुरं रम्यमनुगङ्गम[1]वस्थितम्।
उत्तराञ्चलराज्यस्याकादमी यत्र संस्थिता।।२।।

साधु संस्कृतभाषायाः प्रचारस्य विनिर्मिता।
यया हिमाद्र्यभिख्यानो मानो मह्यमदीयत।।३।।

प्राथम्येन मया प्राप्तो ऽयं मानो ऽन्तरराष्ट्रियः।
आशिषो भवतां यत्र सत्यं हेतुत्वमिय्रति।।४।।

हरिद्वारान्निवृत्तोऽहमष्टाविंशे दिने निशि।
पुण्यतीर्थादध्युषितात् पुण्यात्मभिरनेकशः।।५।।

विंशे दिने प्रयाणं मे ऽभवत्कार्यवशात्पुनः।
कालिकातापुरं यत्रावात्सं दिनचतुष्टयम्।।६।।

प्रत्यावृत्तिस्ततो ऽभून्मे चतुर्थे दिवसे बुधाः!
अर्कतोबरमासस्य मध्यरात्रे ऽसुखावहे।।७।।

एतद्यात्राद्वयवशात्क्लान्तिर्मे समजायत।
क्लान्तिः क्लेशाय कायस्य यत्सत्यं परिकल्पते।।८।।

---

१. यस्य चायामः (२.१.१६) इत्यनेन समासः।

कण्ठरोधातिसाराभ्यां सुतरां पीडितोऽभवम्।
चिन्तां चापमहं घोरां वर्तितव्यं मया कथम्।।९।।

विदेशं प्रति यातास्मि परश्वो दशमे दिने।
न च स्वस्थोऽस्मि कायेन शङ्करः शङ्करोतु मे।।१०।।

भवद्ग्रन्थस्य विषये लेखितव्यं मया द्रुतम्।
इति सञ्चिन्त्य तत्राहं व्यापृतः शुभकर्मणि।।११।।

प्रभोरेव प्रसादेन पद्यमय्यो विनिर्मिताः।
गिरो भवद्‌भ्यो विद्वद्‌भ्यः स्वदेरन्निति मे मतिः।।१२।।

सन्दृब्धमिह यत्किञ्चित् त्वरमाणेन चेतसा।
तत्र कर्तुमकर्तुं वा भवन्तः प्रभविष्णवः।।१३।।

इत्येवोक्त्वा समासेन प्रणामं स्वं निवेद्य च।
सत्यव्रतो भवत्स्निग्धो वाचं विरमयाम्यहम्।।१४।।

७.१०.२००४ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,
सस्नेहाशिषः।

(दोधकवृत्तम्)

पत्रमवापि मया भवदीयं
भावगभीरमथो रमणीयम्।
येन भरः प्रमुदां जनितो मे
वारिभरेण यथा तृषितस्य।। १ ।।

शिष्यहिताय दृढा मम बुद्धि-
स्तद्धितकार्यकृतो मम तोषः।
अत्र समासवचो मम ताव-
न्नास्ति मदर्थमभीप्सितमन्यत्।। २ ।।

प्रार्थनमस्ति ममान्वहमेतद्
बन्धुजना मम सौख्यभृताः स्युः।
तत्सुखमेव ममास्ति सुखं त-
ज्जन्म फलेग्रहि येन मम स्यात्।। ३ ।।

नाद्य जना इतरान् भुवि लोकान्
आत्मतया बहवोऽ ऽभ्युपयन्ति।
भूमिसुता वयमत्र समस्ता
भ्रातृदशां न कथं प्रतिपन्नाः?।। ४ ।।

शन्तिरिहास्ति न कुत्रचनापि
भिन्नमतानि ततानि जगत्याम्।

स्वं मतमेव शुभं प्रतिपन्नो
नाद्रियतेऽन्यमतं भुवि लोकः।।५।।

पक्षविपक्षसमादृतचित्तो
नैकमतादृतबुद्धिरुदारः।
स्वस्य परस्य च भेदविभेदा-
न्नाकलयत्यवनिं स्वकुटुम्बम्।।६।।

बुद्धिरियं विशदा विततास्तु
प्रेम जनेषु मिथश्च चकास्तु।
भूमिरियं प्रमुदा भरितास्तु
स्वार्थपरायणता नहि चास्तु।।७।।

साञ्जलिबन्धमिदं विनिवेद्य
शङ्करशङ्करपादयुगेऽहम्।
पत्रमिदं प्रणयप्रतिरूपं
मोदभरेण भृतः प्रहिणोमि।।८।।

शुभाकाङ्क्षी
सत्यव्रतः

---

१. ना+आकलयन्निति च्छेदः।

## जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति ८.१०.२००४ दिनाङ्के प्रेषितं पत्रम्

(उपजातिवृत्तेन्द्रवज्रावृत्ते)

अभूत्पुरा भारतभूमिभागे
पाणिन्यभिख्यः पदकृद्वरेण्यः।
यः प्राङ्मुखो दर्भपवित्रपाणि-
ररीरचद् व्याकरणं विचित्रम्।। १।।

अध्यायमध्यायमिदं[1] समस्तो
जनो भृशं विस्मयमभ्युपैति।
कथं स विद्वानभवत् समर्थो
ऽनुशासने संस्कृतशब्दराशेः।। २।।

स दिव्यदृष्टिः पदपारदृश्वा
समासवृत्तिं समुपाश्रितः सन्।
सूत्रैश्चतुर्भिर्विशदैः सहस्रै-
र्व्याख्यातवान् संस्कृतशब्दवृन्दम्।। ३।।

सन्त्यत्र तच्छास्त्रसहायकत्व-
मुपाश्रिता व्याकरणप्रसिद्धाः।
पाठा अनेके गणपाठधातु-
पाठादयः शब्दविधौ प्रसिद्धाः।।४।।

तेष्वेव पाठेषु लसत्युणादि-
पाठोऽपि चर्चाविषयोऽस्ति यो नः।

---

१. आभीक्ष्ण्ये णमुल् च (३.४.२२) इत्यनेन णमुल्।

कर्ता बभूवास्य विलक्षणस्य
लोकप्रसिद्ध्या शकटस्य तोकम्।।५।।

मतं तु नैवाभ्युपगम्यमेतत्
प्रामाण्यवैधुर्यवशात् सुधीभिः।
नास्त्यैकमत्यं विदुषां मतेऽस्य
ते मन्वते पाणिनिकर्तृकत्वम्।।६।।

सञ्ज्ञा हि याः पाणिनिना प्रयुक्ता
ह्रस्वादिका ये च तथाऽनुबन्धाः।
उणादिपाठेऽपि तथैव ताश्च
ते चेति सम्यक् प्रविचारणीयम्।।७।।

अतोऽस्य नो पाणिनिकर्तृकत्वे
संशीतिलेशो हृदि बोभवीतु।
नैतत्प्रमाणान्तरसव्यपेक्षं
तथाप्युपस्थाप्यत एतदत्र।।८।।

विश्वासदार्ढ्याय विपश्चितां यच्
छास्त्रानुकूल्याद् ग्रहणीयमेव।
नैकत्र कात्यायन आत्मशास्त्रे
यदाह तत्सूक्ष्मविमर्शयोग्यम्।।९।।

सूत्रेषु यत्पाणिनिराह तस्य
नोणादिभिः सङ्गतिरस्ति यत्र।
तत्रेति कात्यायनसम्प्रयुक्ता
वाचो विशेषेण विचारणीयाः।।१०।।

उणादिपाठो रचितो भवेच्चेत्
पाणिन्यभिख्येन विदां वरेण।
आवश्यकं तद्वचनानुकूल्य-
मुणादिपाठे परिकल्पनीयम्।।११।

उणादयो बाहुलकेन ये तु
सङ्केतिताः पाणिनिना हि तेभ्यः।
संसाध्यते व्याकरणक्रियाया
अभ्यूहनेनामितशब्दराशिः।। १२।।

न तस्य कोशोऽमितशब्दराशे-
र्विर्निर्मितः केनचनाद्य यावत्।
तत्कार्यमासीदवशिष्टमेव
पूर्तिर्यदीयेष्टतमा बभूव।। १३।।

तत्सम्प्रधार्यात्मनि शाब्दिकाग्र्यै-
र्नारायणैः काङ्करवंशजातैः।
विद्वत्प्रवेकै रचितः श्रमेणा-
तिभूयसौणादिकशब्दकोशः।। १४।।

नूत्नोऽत्र विज्ञैर्विधिराश्रितो ऽस्ति
सौकर्यमेनेन भवेदनूनम्।
पदानुसन्धानपरायणानां
विद्वज्जनानामिति मेऽत्र दृष्टिः।। १५।।

वर्णक्रमेणात्र परिश्रमेण
व्रातः पदानां विनिवेशितोऽस्ति।
तद्रूपसिद्धिः परिदर्शिता च
न्यक्षेण याऽपेक्षितसूत्रयुक्ता।। १६।।

व्युत्पत्तयश्चात्र निरुक्तशास्त्र-
सुसङ्गता उल्लिखिता अनेकाः।
तदानुकूल्येन च रूपसिद्धौ
कृतः प्रयत्नः पदकृद्भिरेभिः।। १७।।

कृतश्रमाणामपि पाणिनीय-
शास्त्रे न तादृग् गहनः प्रवेशः।

उणादिसूत्रेषु बृहत्सु यादृक्
संलक्ष्यते काङ्करपण्डितानाम्।। १८।।

पृथक् स्थितः पाणिनिशास्त्रतोऽय-
मुणादिसूत्रौघ इति प्रधार्य।
लोको भृशं व्याकरणप्रियो ऽपि
नात्रादरं प्रायश आदधाति।। १९।।

हेतोरतो ह्यध्ययनप्रथाऽस्य
लुप्ताऽत्र देशे बहुकालतोऽस्ति।
नोणादिशास्त्राध्ययने प्रवृत्तिः
सामान्यतो दृष्टिपथं प्रयाति।। २०।।

एवं प्रवृत्तावभिसम्प्रवृत्ता-
वप्येतदय्यं परिशील्य शास्त्रम्।
नारायणाः पण्डितवर्यधुर्या
उणादिशब्दाकलने प्रवृत्ताः।। २१।।

तेषां प्रवृत्तिः श्रमकर्मसाध्या
सूक्ष्मेक्षिकासंवलिता ऽति हृद्या।
अपूर्वकार्याश्रयणाज्जनानां
चित्तं बलात्कर्षति कोविदानाम्।। २२।।

अतोऽभिनन्द्याहमनिन्द्यसत्त्वान्
नारायणान् शब्दविदां वरेण्यान्।
कवीन्द्रवृन्दारकवृन्दवन्द्यान्
गिरं स्वकीयामुपसंहरामि।। २३।।

सत्यव्रतः शास्त्री

**१.१०.२००४ दिनाङ्के हरिद्वारस्थश्रीविष्णुदत्तराकेशमहाभागान् प्रति प्रेषिताभिनन्दनग्रन्थार्थम् अभिनन्दनसप्तपर्णी**

(अनुष्टुब्वृत्तम्)

महाकविर्महाविद्वान् महासत्त्वो महामतिः।
श्रीविष्णुदत्तराकेशो महाकीर्तिर्विराजते।। १।।

(उपजातिवृत्तम्)

ह्रीरार्जवं मार्दवमात्मशुद्धि-
र्वाचां रहस्याकलने च वृत्तिः।
परोपकारप्रतिबद्धता च
काव्यादिनिर्माणविधौ च दाक्ष्यम्।। २।।

मुखे च नित्यं स्फुटमन्दहासो
दीर्घा च दृष्टिर्विशदा च बुद्धिः।
उदात्तता चेतसि चाप्यमुष्मि-
न्नविप्रवासेन गुणा वसन्ति।। ३।।

स्वभावसिद्धं सदसद्विवेकं
स्वाभाविकीं लोकहितप्रसक्तिम्।
अनन्यसामान्यमुदारभावम्
अस्य प्रशंसन्ति जनाः सदैव।। ४।।

ग्रन्था अनेके रचिता अनेन
शास्त्राण्यनेकानि च शीलितानि।
बुधरनेकैश्च कृतो विमर्शो
देशेष्वनेकेषु कृता च यात्रा।। ५।।

छात्रा अनेके परिपाठिताश्च
शोधार्थिनः शोधदिशं च दिष्टाः।

विद्वत्प्रवेकाः समुपासिताश्च
कर्माण्यनेकानि कृतान्यनेन।।६।।

अतोऽभिनन्द्यैनमनिन्द्यसत्त्वं
विद्वद्वराणां धुरि कीर्तनीयम्।
कवीन्द्रवृन्दारकवृन्दवन्द्यम्
अहं गिरं स्वामुपसंहरामि।।७।।

सत्यव्रतः शास्त्री

१३.११.२००४ दिनाङ्के दीपावलिशुभकामनाप्रसङ्गेन दिल्लीस्थ डा० कृष्णलाल महाभागेभ्यः प्रेषितं पत्रम्

प्रिया डा० कृष्णलालमहाभागाः,
सस्नेहाशिषः।

(अनुष्टुब्वृत्तम्)

लब्धो भवद्भिरुत्कृष्टो वेदवेदाङ्गसञ्ज्ञितः।
पुरस्कार इति ज्ञात्वा मोमुदीति मनो मम॥१॥

ममास्त्यभीष्टः सुतरामुत्कर्षो भवतां सदा।
शिष्योत्कर्षः प्रकर्षाय गुरूणामिति विश्रुतम्॥२॥

बहवो नैव सन्त्यद्य शास्त्रशीलनतत्पराः।
तदेकचित्तास्तत्रैव रमन्ते ये निरन्तरम्॥३॥

ममाप्येवंविधा वृत्तिराचारस्तु न तद्विधः।
लोकाग्रहविनिर्बद्धो न स्वतन्त्रोऽस्मि कर्मणि॥४॥

चर्चासत्राण्यनेकानि तथा सम्मेलनानि च।
आयोज्यन्ते हि लोकेन संवादा यत्र तत्र च॥५॥

उपस्थातव्यं मया तत्रेत्याग्रहग्रहिलो जनः।
मच्छन्दाननुरोधेन प्रेरयत्येव मां मुहुः॥६॥

यद्याग्रहमहं तस्य नाङ्गीकुर्यां तदा तु सः।
मामन्यथैव मन्येत तस्य वृत्तिर्हि तादृशी॥७॥

कः श्रद्धधाति भूतार्थं को भावं वेत्ति वा मम।
अहङ्कारविमूढोऽयमित्येवास्य भवेन्मतिः॥८॥

अनिच्छन्नप्यहं तात! तद्वचः पालयाम्यहम्।
लोकाविरोधिना भाव्यं जनेनेति विचिन्तयन्।।९।।

अस्याः सभाया आध्यक्ष्यमस्यां चोपस्थितिर्मम।
भवत्वित्याग्रहो भूयान् लोकस्य मम कष्टदः।।१०।।

नहीति शब्दं नह्येव वदामि क्वचनाप्यहम्।
मनोभङ्गो भवेत्तेन लोकस्येति विचिन्तयन्।।११।।

उपाश्रितस्य मे नूनं विधिमेनं कथञ्चन।
स्वभावविपरीतं मे कालो याति निरर्थकः।।१२।।

दूयेऽहं तेन सुतरां चिन्तये बहु चाप्यहम्।
किङ्कर्तव्यं मया ऽत्रेति द्वैधीभावमुपाश्रितः।।१३।।

अप्रियत्वं भवेल्लोके यदि नेति वदाम्यहम्।
अङ्गीकरोमि चेद्वाक्यं लोकस्याशान्तिरेव मे।।१४।।

सर्वं सञ्चिन्त्य मयका[1] निश्चयोऽयं स्थिरीकृतः।
न दिल्ल्यां किञ्चिदाध्यक्ष्यपदं वक्ष्यामि[2] संसदि।।१५।।

न विशिष्टातिथिपदं न च वा भाषणादिकम्।
प्रचोदितोऽपि बलवद् दास्यामि स्वहितेप्सुकः।।१६।।

एतेन परिहारो मे कालक्षेपस्य सम्भवेत्।
यं कालं विनियोक्ष्येऽहं शास्त्रशीलनकर्मणि।।१७।।

अपूर्णाः सन्ति मे ग्रन्था नैके, तत्पूरणाय मे।
सर्वात्मना समुद्योगः काले सत्येव मे भवेत्।।१८।।

केवलं शास्त्रचर्चायां ग्रन्थानां रचने तथा।
व्यापारयितुमात्मानमिच्छा बलवती मम।।२०।।

---

१. अव्ययसर्वनाम्नामकच् प्राक् टेः (५.३.७१) इत्यनेन स्वार्थिकोऽकच्। मया इत्येवार्थः।
२. वह् धातोर्लृटि रूपम्।

चिराय सञ्चितो मेऽद्य हृदि भावः स्फुटोऽभवत्।
हृदि यद्वर्तते तद्धि बन्धुष्वेव निवेद्यते।। २१।।

एतन्निवेदनात्पश्चात् तृप्तिं नानुभवन्नहम्।
विषयान्तरमाश्रिश्य वक्तुं किञ्चित्समुत्सुकः।। २२।।

(दोधकवृत्तम्)

दोधकवृत्तमयं प्रहितं यत्
पत्रमभून्मयका तदवापि।
किं विबुधैरिति वेदितुमिच्छा
तद्विषये न भवद्भिरिहोक्तम्।। २३।।

डाकविभागविधिर्नहि साधुः
पत्रमवाप्यत एव यतो नो।
क्वापि च लुप्यत एव ततो नो
प्राप्तिरमुष्य जनेन कदाचित्।। २४।।

एतदवेक्ष्य मया क्रियतेऽत्र
प्रश्न इति प्रकटो मम भावः।
नान्यदितोऽस्ति मम प्रतिपाद्यं
केवलसंशयवारणमेव।। २५।।

योरुपमध्यगतो रमणीयो
देशवरो लसतीटलिनामा।
प्राप्य निमन्त्रणमाप्तजनानां
तत्र गतोऽहमभूवमुदारम्।। २६।।

(द्रुतविलम्बितवृत्तम्)

विविधधर्मदृशा महनीयता-
मुपगतान् भुवि शैलवराञ्शुभान्।

विविधतीर्थवरैः समुपस्कृतान्
विविधलोकनमस्कृतिभाजनान्।। २७।।

विविधलोककथाविषयं गतान्
विविधदेवगणैर्वसतीकृतान्।
विविधमन्दिरमूर्तिसनाथितान्
विविधपुष्करिणीजलचर्च्चितान्।। २८।।

क्वचन केवलतुङ्गशिलामयान्
क्वचन चारुवनेन सनाथितान्।
क्वचन साधुजनार्दनसाक्षिणः
क्वचन दिव्यवचःप्रकटप्रभान्।। २८।।

ऋषिगणैस्तपसे क्वचनाश्रितान्
क्वचन यात्रिगणारवसङ्कुलान्।
क्वचन भक्तिभरस्वयमुत्थित-
स्तुतिपरायणलोकपरायणान्।। ३०।।

क्वचन पुण्यनदीनदसंभवान्
क्वचन चित्रचमत्कृतिसाक्षिणः।
क्वचन रत्नखनिप्रविभासितान्
क्वचन दिव्यवनौषधिमालितान्।। ३१।।

विषयतामुपपाद्य सुधीजन-
प्रगुणबुद्धिविवेचनहेतुतः।
समभवद्रुचिरान्तरराष्ट्रिया
परिषदाशुविबोधविवर्धिनी।। ३२।।

अहमपि प्रमनाः समुपागमं
विबुधदर्शनभाषणलालसः।

गिरिवरैरुपशोभितमद्भुतां
तमवबोधधियेटलिसञ्ज्ञिकाम् ।। ३३ ।।

भुवम् अथो अभिलक्ष्य हिमालयं
निजवचःप्रसरः मयकादृतः।
विकचविस्मितनेत्रयुगैर्बुधैः
सरभसं समपीयत यो बुधैः ।। ३४ ।।

(उपजातिवृत्तम्)

अस्त्युत्तरस्यां दिशि भारतस्य
हिमालयो नाम नगाधिराजः।
नानानदीप्रस्रवणैः सुरम्य
आवासभूमिर्वनदेवतानाम् ।। ३५ ।।

यं वर्णयामास कवीन्द्रवृन्द-
वृन्दारकाणामुपजीव्यभूतः।
कनिष्ठिकाधिष्ठितकालिदासः
पुरा कवीनां गणनाप्रसङ्गे ।। ३६ ।।

असङ्ख्यदेवायतनानि तत्र
भक्तैः समाराधितदैवतानि।
काले पुरा तत्र विनिर्मितानि
तपस्विपूगैः समुपाश्रितानि ।। ३७ ।।

पूर्वापरौ तोयनिधी वगाह्य
यतः स्थितः पर्वतराज एषः।
क्रोडे स्थिता अस्य ततः प्रदेशा
नाना सुरम्याः प्रथिताः पृथिव्याम् ।। ३८ ।।

कश्मीरनामा रुचिरः प्रदेशो
हिमाचलाख्यश्च शुभः प्रदेशः।

बिभ्रत्स्वनाम्न्युत्तरपूर्वशब्दं
ततोऽञ्चलं नूत्नतमः प्रदेशः।।३९।।

एषु प्रदेशेषु सुविश्रुतेषु
कश्मीरदेश्यानुपवर्णयेयम्।
तीर्थानि लोकेन समादृतानि
समासतः कानिचनैव विज्ञाः!।।४०।।

तीर्थान्यसङ्ख्यानि लसन्ति रम्ये
कश्मीरदेशेऽक्षिरसायनानि।
न तानि सर्वाण्यमहमस्ति शक्तः
सविस्तरं वर्णयितुं कथञ्चित्।।४१।।

इतिवचः स्नेहाभिभूतस्य
सत्यव्रतस्य

जयपुरवास्तव्य डा० नारायणशास्त्रिकाङ्करमहाभागान् ६.१२.२००४ दिनाङ्के प्रेषितं पत्रम्

मान्येषु प्रणतिततयः।

(उपजातिवृत्तम्)

दीपावलीपर्वणि या विसृष्टा
विद्वत्प्रवेकैः शुभकामनाः स्वाः।
अमन्दमानन्दमदं मदीये
चित्ते व्यतन्वन् वचसामभूमिम्।। १ ।।

भवादृशानां शुभकामनौघः
करोति कल्याणपरम्पराणाम्।
सृष्टिं समे सृष्टिभरे ऽपि तावत्
कथाऽपि का स्यान्ननु मादृशानाम्।। २ ।।

उणादिकोशो रचितो भवद्भिः
सम्प्रेषितो ऽभून्मयका भवत्सु।
सुहृद्वरेण्याखिल[१]माध्यमेन
प्राप्तो न वाऽसाविति सूचनीयम्।। ३ ।।

मासे ऽग्रिमे जातु ममागमः स्यात्
पुरे वरेण्ये जयपूर्वनाम्नि।
तदा भवद्दर्शनकाम्यया ऽह-
मैतास्मि पुण्यं भवदीयवेश्म।। ४ ।।

---

१. अखिल बंसल इति तस्य नाम।

सुधीजनानां खलु दर्शनं मे
सम्भाषणं तैश्च समं समेत्य।
आनन्दधारां मयि तन्तनीति
या वाग्भरैर्वर्णयितुं न शक्या।।५।।

उक्त्वैतदेव प्रणतो भवत्सु
सदा सदाचारपरायणेषु।
सत्यव्रतो दिल्लिपुराधिवासी
गिरं स्वकीयामुपसंहरामि।।६।।

हैदराबादस्थान् श्रीमतः सी एच् एस् रावमहाभागान् ६.१२.२००४ दिनाङ्के
प्रेषितं पत्रम्

मान्येषु विलसन्तु प्रणतयः।

(उपजातिवृत्तम्)

सम्प्रेषितं मासि सिताम्बरे ऽभूत्
पत्रं भवद्भिर्यदवातनोत्तत्।
हर्षप्रकर्षं हृदये मदीये
गिरो न यं वर्णयितुं समर्थाः।। १ ।।

प्रत्युत्तरे मे समभूद्विलम्ब-
स्तस्येति मां खेदभरो दुनोति।
दिनानि नाना व्यतियापितानि
मया प्रवासं समुपाश्रितेन।। २ ।।

निमन्त्रितो बन्धुजनैरनेकै-
र्विद्वत्प्रवेकैरभिभाषणार्थम्।
सोढ्वाऽपि कष्टानि बहूनि यात्रा-
गतान्यगच्छं बुधदर्शनोत्कः।। ३ ।।

शरीरसादोऽस्ति महांस्तथापि
कर्तव्यबुद्ध्या निरतोऽस्मि कार्ये।
कार्यं मया कार्यमिति प्रवासो
ऽपि मे भृशं कष्टकरो न भाति।। ४ ।।

सारस्वताराधनसम्प्रसक्तो
सुधीजनाराधनतत्परश्च।

कालं स्वकीयं व्यतियापयेय-
मित्येव मे सम्प्रति कामनाऽस्ति।।५।।

एनां प्रभुर्लोकविधानहेतुः
सम्पूरयेदित्यहमर्थयेऽद्य।
सदा भवन्मङ्गलसम्प्रयुक्तो
गिरं स्वकीयामुपसंहरामि।।६।।

भवदाश्रवः
सत्यव्रतः शास्त्री

**२३.१२.२००४ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्**

**मान्येषु विलसन्तु नतिततयः।**

(उपजातिवृत्तम्)

दूरध्वनिद्वारत आकलय्य
भवद्वचः प्रीततरान्तरात्मा।
यथानिदेशं स्वकचित्रमेकं
प्रकाशनार्थं प्रहिणोमि सत्सु।। १।।

यतो न दीर्घं मयि चित्रमस्ति
पास्पोर्ट्निमित्तं परिकल्पितत्वात्।
दीर्घत्वमापादयितुं सुशक्यं
यन्त्रादिसाहाय्यवशादिदं नु।। २।।

सप्ताहमात्रेण नवीनवर्षं
प्रारभ्यते तच्छुभमेव वोऽस्तु।
इत्येव सम्प्रार्थ्य प्रभुं महेशं
गिरं स्वकीयामुपसंहरामि।। ३।।

भवदाश्रवः
सत्यव्रतः शास्त्री

शर्मण्यदेशस्थान् श्रीपायरमहाभागान् प्रति २९.१२.२००४ दिनाङ्के प्रेषितं पत्रम्

प्रिया मार्गरिटामहाभागाः पायरमहाभागाश्च,

सस्नेहाशिषः।

नववर्षशुभाशंसा

(अनुष्टुब्वृत्तम्)

नववर्षं शुभं भूयाद् ऋद्धिसिद्धिसुखप्रदम्।
कीर्तिं च विमलां देयात् कुन्दमालेव शोभनाम्।। १।।

(इन्द्रवज्रावृत्तम्)

वृत्तं यतो वां न चिराय लब्ध-
मुत्कण्ठितं तेन भृशं मनो मे।
लब्धा प्रवृत्तिर्मधुरा प्रियाणां
हर्षप्रकर्षं मनसे ददाति।। २।।

(उपजातिवृत्तम्)

आवां स्थितौ दूरतरेऽपि देशे
सदा भवन्तौ सुतरां स्मरावः।
कालो भवद्भ्यां सह यापितो य-
स्तदीयचर्चासुखमाप्नुवश्च।। ३।।

एकैकशो यान्ति दिनानि भद्रौ!
कालः स्थिरो नो जगतीतलेऽत्र।
विभाति सर्वं चलचित्रवद्यद्
दृष्टं श्रुतं वा गतहायनेषु।। ४।।

स्मृतिस्तदीया मनसि स्थिरा ऽद्य
प्रोद्वेल्लयत्येव भृशं मनो नौ।

अहो गतास्ते दिवसाः पुराणाः
ट्यूबिंगनाख्ये गमिताः पुरे ये।।५।।

अध्यापिताः छात्रगणाः पुरा ये
तेषां प्रवृत्तिर्मयि नास्ति काचित्।
उबर्लिसाख्यः खलु तेषु सम्प्र-
त्यध्यापनाकार्यविधौ प्रसक्तः।।६।।

फ्राइबुर्ग्समाख्ये निवसन् पुरेऽसा-
वनेकशास्त्राभ्यसने प्रसक्तः।
कालं स्वकं यापयते सुखेन
विद्वत्समज्याप्तयशःप्रकर्षः।।७।।

कार्ये युवां सम्प्रति सम्प्रसक्तौ
कस्मिन्निति ज्ञातुमिहाभिलाषः।
कुतूहलं नौ विषयेऽत्र तस्मात्
तच्छान्तिमापादयितुं यतेथाम्।।८।।

इत्येव वाचं समुदीर्य विज्ञौ!
संक्षेपतो दिल्लिपुराधिवासौ।
आवां प्रभुं प्रार्थ्य भवत्प्रकर्षं
गिरं स्वकीयामुपसंहरावः।।९।।

सत्यव्रतः
उषाश्च

७.२.२००५ दिनाङ्के कालिकातास्थान् डा० ध्यानेशनारायणचक्रवर्तिमहाभागान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतयः।

(उपजातिवृत्तम्)

पत्रं समासाद्य सुधीवराणां
मनोमयूरो मम मोमुदीति।
स्नेहप्रतीकं कलयामि पत्रं
माधुर्ययुक्तं भवदीयमेतत्।।१।।

स्वस्था भवन्तस्त्वरितं भवन्तु
प्राग्वच्च कार्येषु भवन्तु सक्ताः।
इत्येव बद्धाञ्जलिरर्थयेऽहं
भवं भवानीसहितं विनम्रः।।२।।

प्रायो न सन्तीह मनुष्यलोके
भवादृशा देवसमा मनुष्याः।
यद्दर्शनेनैव भवेदघौघ-
प्रक्षालनं काम्यतमं जगत्याम्।।३।।

मन्नाम साहित्यअकादमीति
संस्थानसंमान्यसदस्यतायै।
स्नेहाद् बुधग्र्यैरनुशंसितं यत्
तदर्थमत्यन्तकृतज्ञता मे।।४।।

यच्चिन्तितस्सद्भिरहं तदर्थं
तत्रैव सत्यं कृतकृत्यता मे।

स्नेहस्य पात्रं भवतां सदा ऽहं
भवेयमित्येव मनोरथो मे।।५।।

निरन्तरं शास्त्रचये प्रसक्ताः
सदा भवानीपदयुग्मरक्ताः।
छलप्रपञ्चादिविधेर्विरक्ता
भवादृशा धन्यतमा जगत्याम्।।६।।

मार्चान्त्यभागे खलु कालिकाता-
पुरे समायोजनमस्ति मान्याः!
चर्चासदो यद्वशतो ममापि
स्यादेव तत्रागमनं कदाचित्।।७।।

तदा भविष्यत्यघमर्षणं मे
पुण्यं भवद्दर्शनमित्यवेत्य।
संहृष्टचेता भवतः प्रणम्य
गिरं स्वकीयामुपसंहरामि।।८।।

भवदाश्रवोऽहं
**सत्यव्रतः शास्त्री**

२३.२.२००५ दिनाङ्के जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहोदयान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतयः।

(उपजातिवृत्तम्)

विद्वद्वरेण्येषु महाजनेषु
चिराय पत्रं प्रहिणोमि सत्सु।
भवत्स्वहं स्नेहपरिप्लुतात्मा
सदा भवत्क्षेममभीप्समानः।। १ ।।

मार्चाख्यमासस्य दिने चतुर्थे
ऽपराह्णकाले सह धर्मपत्न्या।
पुरे मनोज्ञे जयपूर्वनाम्नि
समागमः स्यादिति सूचयेऽहम्।। २ ।।

तदा भवद्दर्शनकाम्यया ऽह-
मैतास्मि पुण्यं भवदीयधाम।
सम्भाषणादिक्रियया मनस्स्वं
तृप्तिं परां प्रापयितास्मि चैव।। ३ ।।

इत्येव तावद् विनिवेद्य सत्सु
विद्वत्प्रवेकेषु समासतोऽहम्।।
सत्यव्रतो दिल्लिपुराधिवासी
गिरं स्वकीयामुपसंहरामि।। ४ ।।

भद्रकस्थान् डा० सदानन्ददीक्षितमहाभागान् तदीयपुत्र्याः संस्कृतेः शुभविवाहमुपलक्ष्य ९.३.२००५ दिनाङ्के प्रेषितं वर्धापनपत्रम्

प्रिया डा० दीक्षितमहाभागाः

(मालिनीवृत्तम्)

कतिपयदिनपूर्वं पत्रमासाद्य हृद्यं
परिणयशुभवृत्तं सूचयत् संस्कृतेर्द्राक्।
अहमतुलितमापं वागगम्यं प्रमोदं
सकलमपि कुटुम्बं वर्धये स्वाशिषा च।। १।।

सुखमतिशयमेषा पुत्रिका नो लभेत
जनककुलमथ स्वं दीपयेत्स्वैः सुकृत्यैः।
श्वशुरकुलमथो च प्रीणयेत्प्रीतिवाग्भि-
रतिविपुलयशश्च प्राप्नुयाद्धस्तचेयम्।। २।।

इति शुभमहमस्यामाशिषां राशिमद्य
प्रमुदितमनसैव स्वां प्रयुज्य स्ववाचम्।
भवति च सकुटुम्बे संस्कृते संस्कृतेन
विरतिमुपनयामि क्षेमकामः सदैव।। ३।।

सत्यव्रतः शास्त्री

१६.३.२००५ दिनाङ्के पूज्यविद्यानन्दमुनिसपर्यायां समर्पिता अभिनन्दनसप्तपर्णी

विद्यानन्दमुनिः सदा विजयते

(शार्दूलविक्रीडितवृत्तम्)

योगीन्द्रो निजभक्तवत्सलतया यः श्रावकान् देशनां
सम्यग्बोधचरित्रदर्शनलसद्रत्नत्रयोद्भासिताम्।
सम्मान्यां जिनशासनस्य गमयन् नित्यं दरीदृश्यते
विद्यानन्दमुनिः सदा विजयते लोकम्पृणः स प्रधीः।।१।।

यो नित्यं जिनशासनेऽप्यभिरतो नोपेक्षते जातुचिद्
अन्यान्यं सुविचारचारुचरितो विद्वद्वरः शासनम्।
देशान् यो विविधान् गतो हितधिया लोकस्य पद्भ्यां मुनि-
र्नानावारमपास्तकल्मषलवो जेगीयते यद्यशः।।२।।

यं भक्ता उपयान्ति दर्शनधिया स्वात्मावबोधाश्रिता
यो ज्ञानस्य निधानमद्भुतमिति प्रख्यानमाप्तो भुवि।
बुद्धिर्यस्य सदैव शास्त्रनिवहे रंरम्यते निर्मला
साध्वाचारविचारचारुचरितो देदीप्यते यो यतिः।।३।।

यच्छिष्या भुवि कीर्तयन्ति विमलं हस्तावचेयं यश
आचारस्य च यो जगत्यभिमतः मूर्तं स्वरूपं मुनिः।
लोकानां हितकाम्ययैव सततं लोकेषु यो भ्राम्यति
विद्यानन्दमुनिः सदा विजयते लोकम्पृणः स प्रधीः।।४।।

बुद्धौ निर्मलता क्रियासु पटुता ऽऽकारे च सुस्निग्धता
वाण्यां कोमलता विचारसरणौ निर्व्याजता सन्मुनेः।

आचारे शुचिता वपुष्यभिमता कान्तिश्च चेतोहरा
हन्तैकोऽपि गुणः स्तवाय किमुत व्रातो गुणानामयम्।।५।।

शास्त्रालोडनसंस्कृता नवनवोन्मेषोज्ज्वला शेमुषी
यस्य प्रत्नविचाररत्ननिवहं व्याख्याति सम्यक्तया।
ग्रन्थग्रन्थिविभेदनेऽति निपुणः स्वोपज्ञतासंश्रितो
विद्यानन्दमुनिः सदा विजयते लोकम्पृणः स प्रधीः।।६।।

(अनुष्टुब्वृत्तम्)

सा विद्या या विबोधाय सा विद्या या विमुक्तये।
तयैव विद्ययाऽऽनन्दं विद्यानन्दः समश्नुते।।७।।

सत्यव्रतः शास्त्री

### साम्बलपुरस्थान् डा० सदाशिवप्रहराजमहाभागान् प्रति १३.६.२००५ दिनाङ्के प्रेषितं पत्रम्

मान्या:,

(उपजातिवृत्तम्)

गीर्वाणवाङ्निष्ठमन:सु सत्सु
सदा प्रभुध्यानपरायणेषु।
सत्यव्रतो दिल्लिपुराधिवासी
ततिं नतीनामहमर्पयामि।।१।।

काव्यं मनोज्ञं स्तुतिमालिकेति
भवत्प्रणीतं समवेक्ष्य विज्ञा:!
आनन्दपाथोनिधिसंनिमग्न:
कृतज्ञतां स्वां प्रकटीकरोमि।।२।।

प्रभो: स्तुति: क्षेमकरा सदैव
तयैव संसिध्यति सर्वकर्म।
कामानवाप्नोति जनस्तयैव
तयैव कीर्तिं विमलां च लोके।।३।।

संक्षेपतो वाचमिमां प्रयुज्य
ध्यायन् भवत्क्षेममनारतं च।
भवद्गुणावर्जितचित्तवृत्ति-
र्लेखं स्वकं पर्यवसाययामि।।४।।

१४.१.२००६ दिनाङ्के फैज़ाबादस्थान् डा० राजदेवमिश्रमहाभागान्
प्रति प्रेषितं पत्रम्

मान्येभ्यो नमः।

(उपजातिवृत्तम्)

स्नेहाभिषिक्तान् नववर्षहेतो-
भर्वद्भिसृष्टाञ् शुभकामनौघान्।
सम्प्राप्य यो मोदभरो ऽभवत्स
गिरां भरैर्वर्णयितुं न शक्यः।। १।।

वर्षे नवीने भवतां भवेद्भ्राः
कृशानुभानू इव दीप्रदीप्रा।
इत्येव सम्प्रार्थ्य भवच्छुभेप्सुः
सत्यव्रतोऽहं विरमामि वाचः।। २।।

१४.१.२००६ दिनाङ्के चण्डीगढस्थौ डा० एस. एल. गोयल अरुणागोयल इत्येतौ प्रति प्रेषितं पत्रम्

(उपजातिवृत्तम्)

नवीनवर्षस्य कृते भवद्भ्यां
सन्दीपितः स्नेहभरारुणिम्ना।
सम्प्रेषितो यः शुभकामनौघो
चित्ते मदीयेऽजनयत् स मोदम्।।१।।

सहोदरस्नेहभराभिभूतः
सम्प्रार्थयेऽहं जगतामधीशम्।
वर्षं नवीनं भवतां कृतेऽपि
शुभं यशस्यं सुखदं प्रियं स्यात्।।२।।

अहं स्वकार्ये सुतरां प्रसक्तो
हिमाद्रिजाभक्तजनानुरक्तः।
शास्त्रौघसंशीलननित्यरक्तः
सुखेन कालं व्यतियापयामि।।३।।

समासतो वाचमिमामुदीर्य
सदा भवत्स्नेहवशंवदोऽहम्।
सत्यव्रतो दिल्लिपुराधिवासी
वाचं स्वकीयामुपसंहरामि।।४।।

## २०.१.२००६ दिनाङ्के प्रो० हेनरिश् हाक्महाभागान् अमेरिकादेशस्थान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतयः।

(उपजातिवृत्तम्)

पत्रं समासाद्य भवच्छुभेच्छा-
संसूचकं नूतनहायनाय।
इन्दोः कराणां प्रसरेण पद्म-
मिवागमन्मे हृदयं प्रमोदम्।। १।।

पुण्योदयेनैव भवेत्कथञ्चिद्
बुधैर्भवादृक्सदृशैर्जगत्याम्।
सम्बन्धबन्धः प्रणयप्रकर्ष-
सूत्रेण सीव्यन्निव मर्मजालम्।। २।।

क्षणा भवद्भिः सह यापिता मे
ममाभवंस्ते क्षण[1] एव नूनम्।
दूरस्थितैर्मित्रवरैर्गुणाढ्यैः
समागमो हर्षविवर्धनाय।। ३।।

सदा भवन्तः सुखिनो वसन्तु
देशे स्वकीये सुतरां प्रसन्नाः।
शास्त्राणि नाना परिशीलयन्तो
ज्ञानेन लोकं परिदीपयन्तः।। ४।।

---

१. क्षण = उत्सवः। कालविशेषोत्सवयोः क्षणः (अमरकोषः, ३.३.४७)।

इत्येव सम्प्रार्थ्य विभुं विनीतो
भृशं भवत्स्नेहवशंवदोऽहम्।
सत्यव्रतो दिल्लिपुराधिवासी
वाचं स्वकीयामुपसंहरामि।।५।।

पुनश्च

प्रकाश्यमानोऽस्त्यभिनन्दनार्थं
विरच्यमानो बहुकालतो यः।
ग्रन्थो ममेति प्रथमं निवेद्य
वाक्यान्तरं वक्तुमहं प्रवर्ते।।६।।

कार्पण्यदोषोपहतस्वभावः
प्रकाशकस्तं प्रहिणोति नैव।
निबन्धबन्द्धृभ्य इति प्रकामं
मन्मानसे खेदभरं तनोति।।७।।

किमत्र कार्यं मयकेति नाहं
विचारयन्नप्यवधारयामि।
अज्ञानमूढान्धधियो धनाया[१]-
वशं गताः स्वार्थपरायणाश्च।।८।।

प्रकाशकाः कष्टकरा जगत्यां
हठात्कुवर्त्मैव समाश्रयन्ति।
प्रबोधिता अप्यवशा इवैते
बुध्यन्त आत्मार्थहितं न किंञ्चित्।।९।।

तथापि तं (प्रकाशकं) प्रेरयितुं यतिष्ये
सद्बुद्धिमेष श्रयतां कदाचित्।
इत्येतदेवाद्य निगद्य हृद्य-
बन्धुष्वहं जोषमुपाश्रयामि।।१०।।

---

१. अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु (७.४.३४) इतिसूत्रेण धनायाशब्दो गर्धार्थे निपात्यते।

३१.१.२००६ दिनाङ्के पॉलेण्डदेशीयान् प्रो० बिस्कीमहाभागान् प्रति प्रेषितं पत्रम्

**मान्या बन्धुवर्याः**

**सप्रणयं प्रणतयः।**

(वंशस्थवृत्तम्)

अवाप्य सद्भ्यः शुभकामनाभरं
नवीनवर्षस्य कृते मनोहरम्।
अमन्दमानन्दमरन्दमाधुरी-
रसं समास्वादितवानहं कृती।। १।।

सुधीवरा लोकहितैकतत्परा
गुणाकरा ज्ञानविवर्धनातुराः।
पुराणशास्त्रादिपरम्परापरा
न सन्ति लोके बहवो विदां वराः।। २।।

कृतश्रमा भूरि निरस्तविभ्रमा
विशालभूमण्डलसन्ततभ्रमाः।
कठोरमार्गेऽपि निरस्तसम्भ्रमा-
भ्रमाभ्रमालापरिशून्यवाक्क्रमाः।। ३।।

सुहृज्जनानामुपकारकाः सदा
सदा सदाचारपरायणा बुधाः।
मधुक्षरद्वाक्प्रसरोपशोभिता
न सन्ति लोके बहवो भवद्विधाः।। ४।।

अयापयं यं समयं मनोगतान्
विपश्चितोऽहं समया[1] निजाशयान्।
सुखं विवृण्वन् भवतो महाशयान्
स्मृतिर्न तस्याद्य विमुञ्चतीह माम्।।५।।

प्रसन्नगम्भीरपदा सरस्वती
भवन्मुखाम्भोरुहतो विनिर्गता।
चमत्कृतं मां व्यदधादनेकशः
कथं तु सा विस्मृतिभाजनं भवेत्?।।६।।

अतोऽनुरुन्धे प्रणयप्रचोदितो
भवत्परिष्वङ्गसुखं स्मरन् सदा।
निजेन वृत्तेन ममान्तराऽन्तरा-
न्तरङ्गमाप्याययतां भवानिति।।७।।

समासतो वाचमिमामुदीरयन्
निवेदयन् स्वं प्रणयं भवत्सु च।
प्रजावतीं (=भ्रातृजायां) चापि ततिं नतेर्नतो
गिरं स्वकीयामवसाययाम्यहम्।।८।।

१. अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति वार्तिकेन समयायोगे द्वितीया।

७.२.२००६ दिनाङ्के श्रीगङ्गानगरस्थान् डा० सत्यव्रतवर्ममहाभागान्
तदीयपुत्रविवाहोत्सवावसरे प्रेषितं पत्रम्

प्रियेषु भ्रातृवर्येषु प्रणतयः।

(शार्दूलविक्रीडितवृत्तम्)

श्रीगङ्गानगरे शुभे पुरवरे प्रीत्या समायोजिते
बन्धुभ्यो ददति प्रहर्षमतुलं रम्ये विवाहोत्सवे।
बह्विच्छन्नपि सङ्गमं कृशतया कायस्य यात्रामहं
कर्तुं नोऽवसरेऽत्र सक्षम इति क्षम्योऽस्मि मे बन्धुभिः।। १।।

गार्हस्थ्यस्य धुरां[१] सुखं गुरुतरां सन्धारयन्तौ बुधौ
ज्येष्ठान् सर्वविधानुकूलविधिना सम्पूजयन्तौ मुदा।
शास्त्राचारविचारचारुचरितौ लोकम्पृणौ सर्वदा
सुश्लिष्टौ नवदम्पती गमयतां कालं सुखेन स्वकम्।। २।।

इत्याशीः
सत्यव्रतशस्त्रिणः

---

१. भागुरिमते प्रयोगः। आपं चैव हलन्तानां यथा वाचा निशा दिशा।

२३.६.२००६ दिनाङ्के इन्दौरनगरस्थान् डा० प्रभाकर नारायण कवठेकरमहाभागान् प्रति प्रेषितं पत्रम्

मान्येषु प्रणतयः।

(अनुष्टुब्वृत्तम्)

श्री बाजीरावमस्तानीकथामाश्रित्य निर्मितम्।
काव्यं रसमयं चारु रसिकानन्दवर्धनम्।।१।।

पूर्वाह्णेऽद्यैव लब्ध्वाहं मुदः कोटिं परां गतः।
सभाजयामि भवतः स्नेहसिक्तेन चेतसा।।२।।

चिरायाद्य भवल्लेखो मद्दृष्टिपथमागतः।
एकैकशो हि स्मृतयो मधुरा मम मानसे।।३।।

प्रादुःषन्ति[1] वशाद्यासां नात्मनः प्रभवाम्यहम्।
सुखेन यापितः कालः भवत्सङ्गेन यो मया।।४।।

तमद्यापि स्मराम्येव बहुशश्चर्चयामि च।
प्रार्थये च प्रभुं प्रह्वोऽनामयं भवतां सदा।।५।।

मिष्टसम्भाषणौघेन तं स्मरामि पुनः पुनः।
पुनश्च सङ्गमो नौ स्यादिति च प्रार्थये प्रभुम्।।६।।

कार्येष्ववश्यकार्येषु प्रसक्तो ऽनु दिनं बुधाः!
सहभार्यः सपुत्रश्च समयं गमयाम्यहम्।।७।।

भवदभिन्नहृदयः

सत्यव्रतः

---

१. उपसर्गप्रादुर्भ्यामस्तिर्यच्पर (८.३.८७) इत्यनेन षत्वम्।

## १०.११.२००६ दिनाङ्के दिल्लीस्थ डा० प्रकाश पाण्डेयमहाभागान् प्रति प्रेषितं पत्रम्

**मान्या डा० पाण्डेय महाभागा,**
**जयतु भारती**

(उपजातिवृत्तम्)

महात्मनो गान्धिन आंग्लवाचा
कृतिर्निबद्धा प्रथते जगत्याम्।
सत्यानुसन्धानपराः प्रयत्ना
निरूपिता यत्र यतेन तेन।। १।।

रूपान्तरं तस्य गिरा सुराणां
व्यधायि केनापि विदां वरेण।
विवेचने तस्य नियोजितः सन्
व्यापीपरं कर्मणि तत्र यत्नात्।। २।।

आलोचने स्थूलकलेवरस्य
तस्येति किञ्चिद्विमनायितोऽपि।
कार्यं मया कार्यमिदं धियेति
श्रमेण कर्तुं तदहं प्रवृत्तः।। ३।।

प्रवृत्तिमांस्तत्र च कालतोऽहं
प्रमादभूयिष्ठमिदं विभाव्य।
करोमि कार्यं यदि तत्र कालो
याप्ये[1]ऽत्र कृत्ये मयकाऽस्तु याप्यः।। ४।।
नेदं च सह्यं मम सम्भवेदि-
त्यहं स्वचित्ते प्रविचार्य सम्यक्।

---

१. याप्ये=निन्द्ये

रूपान्तरापादितपुस्तकं द्राक्
दृढं परावर्तयितुं प्रवृत्तः।।५।।

वर्षीयसो जातु न वर्षपूगः
स्वस्यायुषः सम्प्रति मेऽवशिष्येत्।
अतो न कृत्येष्वहमीदृशेषु
व्यापारणायां रुचिमादधामि।।६।।

आलोचने शास्त्रचयस्य सम्यक्
काव्यादिकानां रचने तथा च।
मनीषिसङ्गेन विचारणे च
मनो मदीयं मुदमादधाति।।७।।

अयं स्वधर्मो मम, पालनीयो
ऽयमित्यहं बुद्धिमुपाश्रितोस्मि।
कार्यान्तरेष्वर्थकरेष्वपीच्छा
प्रवर्तते मे कलयाऽपि नाद्य।।८।।

आत्मीयरूपा अथ चात्मनीनाः[1]
सन्तो भवन्तः कृपया क्षमन्ताम्।
रूपान्तरापादितपुस्तकस्य
प्रत्यर्पणं सम्प्रति यत्करोमि।।९।।

(अनुष्टुब्वृत्तम्)

इत्येवोक्त्वा समासेन वैवश्यं प्रकटय्य[2] च।
क्षमापयित्वा चात्मानं वाचं स्वामुपसंहरे।।१०।।

सुरसरस्वतीसमाराधनैकव्रतः
सत्यव्रतः शास्त्री

---

१. आत्मनीनाः=आत्मने हिताः, आत्मन्विश्वजनभोगोत्तरपदात्ख (५.१.९) इति खप्रत्यये तस्य च ईनादेशे रूपम्।
२. ल्यपि लघुपूर्वादिति (६.४.५६) णेरयादेशः।

पटियालास्थ डा० सुदेशगौतममहाभागान् प्रति ३०.१२.२००६ दिनाङ्के प्रेषिताः

शुभाशिषः

(वसन्ततिलकावृत्तम्)

मूकं निमन्त्रणमिति प्रथिमानमाप्त-
मासाद्य काव्यनिवहं भरितं रसेन।
आनन्दकोटिमहमापमवर्णनीयां
काव्योत्तमं सुखयते नहि कस्य चेतः।। १।।

गुम्फो गिरामिह भृशं मधुरो मनोज्ञः
स्वाभाविकश्च लसतीह रसप्रवाहः।
भावः समुन्मिषति वाचनया च कश्चि-
च्चेतः सतां समुदमुन्मदयेदवश्यम्।। २।।

सामाजिकीं विषमतां विषमां च वृत्तिं
लोके कविः समचिचित्रदिह स्वकाव्ये।
तेन ध्रुवं जनमनः प्रविचालितं स्या-
दित्यस्ति मे मतिरिहातिनिबद्धमूला।। ३।।

काव्यं तदेव सफलत्वमुपैति लोके
धूनोति यत्सहृदयस्य जनस्य चेतः।
वैषम्यमत्र सुकविः परिलक्ष्यमाणं
लोके विचित्रमिह चित्रयति प्रबुद्धः।।४।।

अन्यैर्जनैः परिवृतोऽपि जनः समन्ता-
देकाकिनं स्वमनुपश्यति वृक्षवद् हा!

एको ह्यसौ विषहते ऽत्र कुठारपातं
झञ्झाप्रहारमपि चात्र स एक एव।।५।।

यावज्जनोऽत्र जगति ध्रियते ऽस्ति तावत्
सर्वोयमुत्सव इति प्रवदन्ति सन्तः।
प्राणेषु पार्थिवमिमं प्रविहाय कायं
निष्क्रान्तवत्सु ननु कीदृश उत्सवोऽस्ति।।६।।

यज्ञादिकं परिसमाप्तिमुपेयुषि प्राक्
सद्ब्राह्मणाननिशमाशित[1]माशयित्वा।
तच्छिष्टमन्नमभितो व्यतरन् व्यवस्था-
संयोजका इतरभक्तजनेषु भक्त्या।।७।।

तद्वीक्ष्य तत्स्थलमुपागुरनेकसङ्ख्या
भिक्षार्थिनः प्रबलया क्षुधया परीताः।
निर्भर्त्सिताश्च गलहस्तिकया च यज्ञ-
वाटात् कृता बहिरहो! नियतिर्विचित्रा।।८।।

देवालयेषु विदितो ऽर्चकभेदभावः
पुत्रैः कृतश्च जननीजनकावमानः।
पत्न्यैकयैव विधृतो गृहकार्यभारः
कार्यालयेषु च तया क्रियमाणकर्म।।९।।

तद्वेतनग्रहणकर्मणि केवलं च
भर्तुः प्रवृत्तिरति घृण्यतमा तथा च।
तद्वेतनद्रविणतः क्रयणाद्विपण्या
शाट्यास्तदर्पणमथ प्रवणं च तस्यै।।१०।।

भ्रूणस्थितौ स्वदुहितुर्हननं स्वमात्रा
मद्यक्रये च विनियोजनमर्थराशेः।

१. आशितम्=आतृप्ति।

तस्यांशमात्रमपि न श्रमिकाय दानं
विद्यालयेष्वनुचितो धनसञ्चयश्च।। ११।।

कामादिदोषनिवहं प्रति च प्रसक्ति-
र्या नाशयेज्जगति हन्त! गुणान् समस्तान्।
एतद्विधा बहुविधा विषया: स्वकाव्ये
चित्रीकृता: कविवरेण मनोज्ञशैल्या।। १२।।

(अनुष्टुब्वृत्तम्)

कवितासङ्ग्रहोऽस्य स्यात्प्रीतये साहितीजुषाम्।
इति सम्प्रार्थये प्रह्व: शङ्करं लोकशङ्करम्।। १३।।

सत्यव्रत: शास्त्री

दिल्लीस्थ डा० कृष्णलालमहाभागान् प्रति १३.४.२००७ दिनाङ्के प्रेषितं पत्रम्

डा० कृष्णलाल महाभागेभ्यः स्वस्ति।

(अनुष्टुब्वृत्तम्)

वैक्रमाब्दशुभाशंसापत्रमाप्य मनोहरम्।
सम्प्रापं परमानन्दमवाङ्मनस[1]गोचरम्।।१।।

भूयान् कालो व्यतीतोऽद्य दृष्टानां भवतामिति।
उत्कण्ठितं मम स्वान्तं भवत्सङ्गाभिलाषुकम्।।२।।

दिल्लीति नगरं नाम नानोपनगराकुलम्।
अध्वा पराचैर्जगुरिः[2] क्लेशायात्र निवासिनाम्।।३।।

प्रत्यक्षतो हि सम्पर्को नह्यत्र सुकरो नृणाम्।
कुशलादिपरिप्रश्नो दूरवाण्यैव सम्भवेत्।।४।।

ग्रन्थद्वयस्य रचने साम्प्रतं व्यापृतोऽस्म्यहम्।
कार्यान्तरैरनेकैस्तु प्रतिरुद्धोऽपि सन्ततम्।।५।।

लोकान्मुक्तिमभीप्सामि न मां लोकश्च मुञ्चति।
स्नेहवागुरया बद्धो वृषवद्रोरवीम्यहम्।।६।।

कालं कथञ्चिदाकृष्य लौकिकात्कृत्यसङ्ग्रहात्।
काव्यशास्त्रविनोदं स्वं कलया सम्प्रवर्तये।।७।।

शुभेच्छुः
सत्यव्रतः

---

१. अचतुरविचतुरसुचतुरेत्यादि सूत्रेण (५.४.७७) वाङ्मनस इत्यस्य निपातनम्।
२. अत्र सरमापणिसंवादसूक्तस्थ 'दूरे ह्यध्वा जगुरिः पराचैः' इत्यस्यच्छाया।

जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति
४.५.२००७ दिनाङ्के प्रेषितं पत्रम्

मान्येषु प्रणतयः।

(मालिनीवृत्तम्)

कतिपयदिनपूर्वं पत्रमासाद्य हृद्यं
मम हृदि सममूद्यो हर्षवर्षप्रकर्षः।
नहि कथमपि शक्यः स प्रवाचाऽपि वाचा
विशदयितुमतीव क्रान्तदृष्ट्याऽपि पुंसा।। १।।

मम मनसि दिदृक्षा श्रीमतां पण्डिताना-
महमहमिकया मां चोदयत्येव नित्यम्।
जयपुरपुरमैतुं सत्सु कश्चिच्च कालं
गमयितुमिति हेतोस्तत्र यत्नं करोमि।। २।।

बहुविधकरणीयैः कृत्यजातैः समन्ताच्
छ्रमभरमुपयातो राजधान्यां स्थितोऽहम्।
कतिपयदिवसानन्यत्र गन्तुं समीहा
मम मनसि बुधाग्र्या! उन्मिषत्येव तीव्रा।। ३।।

विगमितपरिखेदो विप्रवासात् सुखाद्या-
दुपगतपरितोषः सज्जनैः सङ्गमेन।
पुनरपि परिलब्धस्वान्तसौख्यं स्वकार्ये
ष्वभिरतिततिमाप्तुं स्यामहं चेत्समर्थः।। ४।।

(अनुष्टुब्वृत्तम्)

इत्येवं चिन्तयन् विज्ञा मासान्ते ऽहं दिनद्वयम्।
भवत्पुरे जयपुरे निविवत्सामि[1] सुन्दरे।।५।।

भवदाश्रवः
सत्यव्रतशास्त्री

१. निपूर्वकाद् वसधातोः सनि उत्तमपुरुषैकवचने रूपम्।

**दिल्लीस्थ डा० कृष्णलालमहाभागान् प्रति १२.६.२००७ दिनाङ्के प्रेषितं पत्रम्**

**प्रिया बन्धुवर्याः**

**सस्नेहाशिषः।**

(आर्यावृत्तम्)

हृदयप्रसूननामा काव्यग्रन्थोऽतिशोभनः सुखदः।
पापिष्ठेतिसमाख्योऽनवद्यहृद्यगद्यश्च ।।१।।

सम्प्रेषितौ भवद्भिरुभकौ प्रणयोपहाररूपेण।
चित्ते मुदां भरं मे गिरामगोचरं व्यतानिष्टाम्।।२।।

साहित्येऽभिनिवेशः सततं दृढोऽभिलक्ष्यते सत्सु।
प्रीणाति तन्मनो मे नहि सन्ति भूयो भवद्विधा अद्य।।३।।

आशीर्भिर्वर्धयेऽहं प्रार्थये शुभमनामयं चापि।
भवतां सकुटुम्बानां सततं हितकामनाभरैर्भरितः।।४।।

**सत्यव्रतः**

अलवरस्थान् डा० श्यामशर्मणो १२.६.२००७ दिनाङ्के प्रेषितं पत्रम्

मान्याः सप्रणयं प्रणमस्यामि

(इन्द्रवज्रोपजातिवृत्ते)

पत्रं समासाद्य मनोऽभिरामं
सद्भिर्भवद्भिः प्रणयेन सृष्टम्।
स्पष्टाक्षरं स्पष्टवचोविलास-
मानन्दकोटिं परमां गतोऽहम्।। १।।

सम्भाषणेनाथ च दर्शनेन
प्रतीक्षितेनातिचिराय चित्ते।
बुधैर्भवद्भिः सह सम्प्रवृत्तः
सन्तोषपूगो हृदि मे न माति।। २।।

आसीन्ममेच्छाऽल्वरदर्शनीय-
स्थलानि लोकेषु सुविश्रुतानि।
अवेक्षितुं नेत्ररसायनानि
नापूरयत्तां बलवान् कृतान्तः।। ३।।

न भूरयोऽद्याक्षिगता भवन्ति
विद्वत्प्रवेका विलसद्विवेकाः।
अधीतिनः शास्त्रचये श्रमेण
दिगन्तविश्रान्तयशोऽतिरेकाः।। ४।।

अन्वेषमन्वेषमहं प्रयत्ना-
दुपैमि तान् भक्तिनतेन मूर्ध्ना।

ते गौरवं देशवरस्य नोऽद्य
कल्याणकृत् तेष्वधि संस्कृतिर्नः।।५।।

उद्दिश्य तानेव विपश्चिदग्र्यः
कीलहार्ननामा पदकृत्सु धुर्यः।
शर्मण्यदेश्यो धृतविग्रहा भो
ग्रन्थालया एत इति प्रपेदे।।६।।

विद्वद्वराणां खुल तद्विधानां
सङ्ख्या क्रमाद्यद् ग्रसिमानमेति।
विदूयते तेन ममान्तरङ्गं
भविष्यचिन्ताकवलीकृतस्य।।७।।

ज्ञानार्जनं केवलजीविकायै
तत्त्वावबोधाय तदस्ति नैव।
विद्यार्थिनो ह्यद्यतना विमूढा
न दीर्घदृष्टिं कलयन्ति हन्त।।८।।

सहस्रशो वाऽप्यथ लक्षशोऽत्र
ग्रन्था विनष्टा अथ नाशिता वा।
विधर्मिभिः सन्ति तथाऽप्यनेके
ग्रन्थालयौघेषु सुरक्ष्यमाणाः।।९।।

सम्पादने तत्र मनो ददीरन्
यदि प्रबुद्धास्तरुणास्तदैव।
पूर्वैः कृते नः परिपालितस्य
ज्ञानस्य सर्वत्र विकीर्णता स्यात्।।१०।।

भवादृशाश्चेद्विबुधाः स्वकीयान्
कृत्येऽत्र शिष्यान् विनियोजयेयुः।

रक्षा ध्रुवं प्राक्तनवाङ्मयस्य
　　भवेन्न शङ्का मम लेशतोऽत्र।।११।।

मया प्रयत्नोऽत्र कृतो बलीयान्
　　शक्तोऽभवं प्रेरयितुं न शिष्यान्।
नितान्ततान्तोऽस्मि ततो न जाने
　　किं वा कथं वा करणीयमत्र।।१२।।

अधीतविद्योऽस्मि गुरोः सकाशाच्
　　छ्रमेण शास्त्राणि मया श्रुतानि।
स्वं जीवितं निष्फलमेव मंस्ये
　　नाध्यापयेयं यदि तानि कञ्चित्।।१३।।

ऋणं तु निर्यातयितव्यमेव
　　पुंसा गृहीतं यदभून्मुनिभ्यः।
संस्कारजन्या दृढतां गता मे
　　पाषाणलेखेव विचाररेखा।।१४।।

परन्तु शास्त्रेषु रुचिं बिभर्ति
　　न कोऽपि शिष्योऽप्यनुशासितोऽद्य।
उत्तीर्णतां वाञ्छति केवलं स
　　तत्तत्परीक्षासु, तदस्य लक्ष्यम्।।१५।।

नास्य प्रवृत्तिः परिलक्ष्यतेऽद्य
　　पाठ्यत्वनिर्धारितपुस्तकेभ्यः।
अध्येतुमन्यत्किमपीति तन्मे
　　दुःखं महच्चेतसि तन्तनीति।।१६।।

न केवलं नेतरपुस्तकानि
　　च्छात्रा इदानीं परिशीलयन्ति।

पाठ्यांशमात्रे ऽवहिताः कथञ्चिद्
ग्रन्थं न ते ऽन्यं परिशीलयन्ति।। १७।।

तत्तत्परीक्षोत्तरणे प्रवृति-
र्ज्ञानार्जने नैव तु लक्ष्यतेऽद्य।
तेषां रुचिर्नेतरशास्त्रपाठे
ते जीविकाकृत्य पठन्ति पाठम्।। १८।।

सर्गाः कियन्तो रघुवंशकाव्ये
ज्ञातुं न तेषां रुचिरस्ति कापि।
परीष्टिनिर्धारितसर्ग एव
तेषां प्रवृत्तिर्विषयान्तरे नो।। १९।।

न कालिदासस्य गिरां रहस्यं
न भारवेर्वा पुनरर्थतत्त्वम्।
माघस्य नो वा विशदान् गुणांस्त्रीन्
बोद्धुं हि ते यत्नपरा भवन्ति।। २०।।

सूत्राण्यहं व्याकरणस्य कर्तुः
श्रीपाणिनेः पाठयितुं समुत्कः।
पातञ्जलं भाष्यमथ प्रदीप-
समन्वितं प्रौढमनोरमां च।। २१।।

अन्वेषमन्वेषमपि प्रयत्ना-
ल्लभे सुशिष्यं नहि तादृशं यः।
अध्येतुकामोऽस्ति परिश्रमेण
ग्रन्थानिमान् शब्दविदां वरेण्यान्।। २२।।

न न्यायशास्त्रं किरणावलीं वा
न ब्रह्मसूत्रं न च वाऽर्थशास्त्रम्।

अध्येतुकामोऽस्ति जनोऽत्र कोऽपि
कालस्य तावद्विपरीतभावात्।। २३।।

सम्भूय सर्वैरिदमस्ति चिन्त्यं
विपत्तिरेषा महती पुरो नः।
शास्त्राणि विद्वत्परिशीलितानि
कालेन यास्यन्ति विलोपमेव।। २४।।

अनिच्छताऽप्यत्र मया बहूक्तं
जाने न हि प्रेरणया कया तत्।
समानशीलेषु यदा कदाचिद्
भावाः स्वकीयाः प्रकटीभवन्ति।। २६।।

इत्येतदुक्त्वा प्रणयेन सत्सु
भवच्छुभं प्रार्थ्य महेश्वरं च।
संमोहितोऽहं भवतां गुणौघै-
र्वाचं स्वकीयामुपसंहरामि।। २७।।

अत्रभवत्सु स्निग्धः
सत्यव्रतः शास्त्री

१२.६.२००७ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रियेभ्यो डा० कृष्णलालमहाभागेभ्यः स्वस्ति।

(अनुष्टुब्वृत्तम्)

भारतगौरवं नाम तथा च यज्ञगौरवम्।
काव्यद्वितयमासाद्य प्रहर्षः परमो मम।।१।।

(उपजातिवृत्तम्)

उदात्तभावो रमणीयशैली
निरन्तरश्चापि रसप्रवाहः।
पदानुबन्धोऽश्लथसन्धिबन्धः
काव्यद्वये दृष्टिपथं प्रयान्ति।।२।।

अनारतं काव्यकृतौ निमग्नाः
शास्त्रौघसम्यक्प्रविचारलग्नाः।
सौम्या भवन्तः सुखिताः स्वकालं
नयन्त्विति प्रार्थनतत्परोऽस्मि।।३।।

सदा भवन्मङ्गलाभिलाषी
सत्यव्रतः

२०.७.२००७ दिनाङ्के मैनपुरीस्थान् श्रीप्रकाशचन्द्रमिश्रमहाभागान्
प्रति प्रेषितं पत्रम्

स्वस्ति मान्येभ्यो विपश्चिदपश्चिमेभ्यः।

(अनुष्टुब्वृत्तम्)

पत्रमासीषदं रम्यं भवतां स्नेहसंयुतम्।
आनन्दस्य परां कोटिमध्यरुक्षमहं यतः।।१।।

विद्याव्यसनिनो लोके भवादृक्षाः सुदुर्लभाः।
शास्त्रेष्वकुण्ठिता बुद्धिर्भवतां क्रमते[1] सदा।।२।।

शतं जीवन्तु शरदस्ततो भूयोऽपि चेत्यहम्।
प्रार्थये पार्वतीजानिं भक्तिप्रवणचेतसा।।३।।

नानाग्रन्थप्रणयने व्यापृतोऽहमनारतम्।
अश्नुवे परमं सौख्यं ब्रह्मानन्दसहोदरम्।।४।।

शास्त्रानुशीलने व्यस्तो यान्तं कालं न लक्षये।
लौकिके कृत्यजाते तु रुचिरेवास्ति मे नहि।।५।।

नैवातो गन्तुमिच्छामि गोष्ठीषु च सभासु च।
एकान्तैकरुचिस्सत्यं सञ्जातोऽस्मि विदां वराः।।६।।

क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेत्।
सूक्तिमेतां समाश्रित्य यापयामि स्वजीवितम्।।७।।

अभ्यसूयन्त्यतो मह्यं[2]मकिञ्चिज्ज्ञा जना अपि।
अमन्दस्याभियोगस्य महत्त्वं ते विदुर्नहि।।८।।

---

१. वृत्तिसर्गतायनेषु क्रमः (१.३.३८) इत्यनेनात्मनेपदम्।
२. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः (१.४.३७) इत्यनेन चतुर्थी।

बहु नाहं विवक्षामि विषयेऽत्र यतस्ततः।
विषयान्तरमाश्रित्य गिरं स्वां सम्प्रवर्तये।।९।।

पद्योत्तमानि रम्याणि भवद्भी[१]रचितान्यहम्।
पाठं पाठं[२] सुबोधानि निर्वृतिं परमां गतः।।१०।।

यत्र तत्र मया किञ्चिद्यथामति निरूपितम्।
आदेशाद् भवतामेव नाहं दृश्योऽस्मि दोषतः।।११।।

एकाधिकशतं मुद्रा भवद्भिः प्रेषिता मयि।
भवत्स्नेहप्रतीकत्वात् स्वीक्रियन्ते मयाऽऽदरात्।।१२।।

भवतां सारस्वतो बन्धुः
सत्यव्रतशास्त्री

१. रो रि (८.३.१४) इत्यनेन पूर्वरेफलोपे
पूर्वस्याणो ढ्रलोपे पूर्वस्य च दीर्घोऽणः (६.३.११) इत्यनेन दीर्घः।
२. आभीक्ष्ण्ये णमुल् च (३.४.२२) इत्यनेन णमुल्।
अभीक्ष्णं पठित्वा, पुनः पुनः पठित्वा इत्यर्थः।

३०.९.२००७ दिनाङ्के दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति प्रेषितं पत्रम्

प्रिया डा० कृष्णलालमहाभागाः
शुभाशिषः।

(अनुष्टुब्वृत्तम्)

वायरल्ज्वरेण ग्रस्तोऽहं कासेन कठिनेन च।
महत्कष्टप्रदेनाहं प्रहेतुमशकं नहि।।१।।

भवत्पत्रप्रतिवचो बह्विच्छन्नपि यत्ततः।
अनौचित्यवशात्खिन्नः पत्रमेतत् प्रवर्तये।।२।।

नैतादृशं मया सोढं कष्टं पूर्वं कदाचन।
कासेन भिद्यमानानीवान्त्राण्यासन् तदा मम।।३।।

सर्वरात्रं विषादेन ग्रस्तोऽहं व्यत्ययापयम्।
वार्धक्यं सर्वकष्टानां मूलमित्यवधारयन्।।४।।

पूर्वे वयसि न मया कायसंरक्षणे मनः।
प्रदत्तमिति तस्यैव फलमेतत् प्रतर्कये।।५।।

निबद्धव्यो ग्रन्थ एष लेख्यो लेखश्च नूतनः।
रचितव्यं काव्यमिदमित्येवं गमितं वयः।।६।।

विश्रमाय क्षणो नैव दत्तो ऽभूद् दत्तचेतसा।
कार्यान्तरेष्विति हहा! शरीरमवसादितम्।।७।।

शरीरसादे को बन्धुः कः सहायः स्वकश्च कः।
एकाकि जीवनं सत्यमूषरक्षेत्रसन्निभम्।।८।।

येषामपि प्रयत्नेन कार्यसिद्धिः कृता मया।
कृतोपकारास्तेऽप्यद्यौदासीन्यं समुपाश्रिताः।।९।।

एषैव खलु लोकस्य पद्धतिश्चिन्तनं तथा।
नैतद् व्युत्क्रमते कश्चित्तत्र का परिदेवना।। १०।।

सह्यमेव मयेदं स्यादिति बुद्धिं समाश्रितः।
यथाकथञ्चित्कार्यौघं स्वकीयं सम्प्रवर्तये।। ११।।

सप्तसप्ततिवर्षाणि पूर्णाणि ह्यायुषो मम।
शुभाशंसाभरात्स्वानां[1] प्रविष्टश्चाष्टसप्ततिम्।। १२।।

वर्षमेतद्यापयेयं प्रसन्नेनान्तरात्मना।
रतः स्वकेषु कार्येषु प्रार्थनैषा प्रभौ मम।। १३।।

निरन्तरं स्नेहभराद्भवतः संस्मराम्यहम्।
कश्चित्स्नेहमयस्तन्तुः मर्मौघं सीव्यतीह नौ।। १४।।

सदा भवन्तः सुखिनः सन्त्विति प्रार्थये प्रभुम्।
इत्यनेनैव चैवाहं गिरं स्वामुपसंहरे।। १९।।

सदा भवन्मङ्गलाभिलाषी
सत्यव्रतशास्त्री

१. स्वानां=बन्धूनाम्। स्वमज्ञातिधनाख्यायाम् (१.१.३५) इत्यनेनासर्वनामता।

### जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति
### २१.१०.२००७ दिनाङ्के प्रेषितं पत्रम्

**मान्या महाकवयः,**

सप्रणयं प्रणमस्यामि।

(उपजातिवृत्तम्)

अद्यास्ति पुण्यं विजयेति पर्व
सुखायते[1] येन समस्तलोकः।
विधाय सम्यङ् नवरात्रपूजा-
मुद्यच्छते[2] मूर्तिविसर्जने च।। १।।

रात्रिष्वमूष्वेव जनो निभाल्य
श्रीरामलीलां मुदितान्तरात्मा।
दशाननस्यापतितां विपत्तिं
निरीक्ष्य पापाद्वि[3]जुगुप्सते द्राक्।। २।

आसीद् दशास्यः श्रुतपारदृश्वा
सम्मान्यविप्रर्षिकुले प्रजातः।
तथाऽप्यभूद् बुद्धिविपर्ययोऽस्य
वामे विधौ बुद्धिबलं न भाति।। ३।।

विभीषणाद्यैः परिबोधितोऽपि
हितैषिभिर्नैव वचः स तेषाम्।

---

१. सुखादिभ्यः कर्तृवेदनायाम् (३.१.१८) इत्यनेन क्यङ्। सुखं वेदयते अनुभवतीत्यर्थः।

२. समुदाङ्भ्यो यमोऽग्रन्थे (१.३.७५) इत्यनेनात्मनेपदम्।

३. जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम् इति वार्तिकेन पञ्चमी।

## जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति
## २१.१०.२००७ दिनाङ्के प्रेषितं पत्रम्

मान्या महाकवयः,
सप्रणयं प्रणमस्यामि।

(उपजातिवृत्तम्)

अद्यास्ति पुण्यं विजयेति पर्व
सुखायते[१] येन समस्तलोकः।
विधाय सम्यङ् नवरात्रपूजा-
मुद्यच्छते[२] मूर्तिविसर्जने च।। १।।

रात्रिष्वमूष्वेव जनो निभाल्य
श्रीरामलीलां मुदितान्तरात्मा।
दशाननस्यापतितां विपत्तिं
निरीक्ष्य पापाद्वि[३]जुगुप्सते द्राक्।। २।

आसीद् दशास्यः श्रुतपारदृश्वा
सम्मान्यविप्रर्षिकुले प्रजातः।
तथाऽप्यभूद् बुद्धिविपर्ययोऽस्य
वामे विधौ बुद्धिबलं न भाति।। ३।।

विभीषणाद्यैः परिबोधितोऽपि
हितैषिभिर्नैव वचः स तेषाम्।

---

१. सुखादिभ्यः कर्तृवेदनायाम् (३.१.१८) इत्यनेन क्यङ्। सुखं वेदयते अनुभवतीत्यर्थः।
२. समुदाङ्भ्यो यमोऽग्रन्थे (१.३.७५) इत्यनेनात्मनेपदम्।
३. जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम् इति वार्तिकेन पञ्चमी।

अङ्गीचकारापितु कापथं[1] स
करालकालस्य वशात् प्रपेदे।।४।।

न जीवनाशं[2] स ननाश केवलं
लङ्कां निनायापि तु नाशमार्गम्।
विवेकशून्यो नहि केवलं स्वं
विनाशयेद्धो! इतरनापि स्वान्[3]।।५।।

श्रीरामलीलां प्रतिवर्षमेव
सङ्गच्छमानः[4] स्वसुहृज्जनेन।
सोत्साहमालोकयते जनौघो
रसं समास्वादयते च तस्याः।।६।।

श्रीरामलीलास्थलमापतन्ति
तद् द्रष्टुकामाः शतशोऽथ लोकाः।
महोत्सवोऽयं रुचिमादधाति
कथाविचित्रत्ववशादमुष्य।।७।।

कथाप्रसङ्गो विविधो विचित्रो
लोकान् हि विस्माययति प्रकामम्।
सामान्यभिन्नं जगतीतलेऽस्मिन्
लोकाय सत्यं स्वदते नितान्तम्।।८।।

किंहेतुकं रामकथाप्रियत्व-
माग्नेयदेशेष्विति पृष्ट आह।

---

१. का पथ्यक्षयोः (६.३.१०४) इत्यनेन कुशब्दस्य कादेशः।
२. कर्त्रोर्जीवपुरुषयोर्नशिवहोः (३.४.४३) इत्यनेन णमुलि कषादिषु यथाविध्यनुप्रयोगः (३.४.४६) इत्यनेन नशेरनुप्रयोगः। जीवः=जीवितः ननाशेत्यर्थः।
३. स्वान् बन्धूनित्यर्थः।
४. समो गम्यृच्छिभ्याम् (१.३.२९) इत्यनेनात्मनेपदम्।

तदीयलोको विविधानि पात्रा-
ण्यत्रेग्रती[1] त्याह विशिष्टहेतुम्।। ९।।

सन्त्यत्र रक्षांसि महाबलानि
कालायसप्रख्यरुचीनि तावत्।
सविग्रहाण्यन्धतमांसि दंष्ट्रा-
करालवक्त्राणि भयावहानि।। १०।।

समुद्वलन्नेत्रयुगानि दीर्घ-
कायानि छायेव चरन्ति[2] भूमौ।
विकीर्णकेशानि महास्वनानि
भूखण्डवद्दन्तुरवक्त्रकाणि।। ११।।

तन्मध्य एवात्र लसन्ति साधु-
शिरोमणीनां धुरि संस्थितानि।
श्रीरामपादार्पितचित्तकानि
विभीषणादीन्यविभीषणानि।। १२।।

षण्मासपर्यन्तविनिद्रितानि
तं कालमेवाथ गतानि निद्राम्।
स्थितानि धर्म्ये पथि कुम्भकर्ण-
सञ्ज्ञानि रूपेण विलक्षणानि।। १३।।

इन्द्रस्य जेता यशसां विचेता
चकास्ति दैत्योऽत्र हि मेघनादः।
दशाननत्वाद् भुवनाधिनाथो
दशाननोऽप्यत्र दृशं प्रयाति।। १४।।

---

१. गत्यर्थकस्य ऋधातोर्लटि प्रथमपुरुषबहुवचने रूपम्।
२. क्लीबे शत्रन्तप्रयोगो बहुवचने। अत्र शाकुन्तलीयस्य 'छायाश्चरन्ति विविधा भयमादधानाः सन्ध्यापयोदकपिशाः पिशिताशनानाम्' (३.२४) इत्यस्यच्छाया।

सन्त्यत्र हर्यृक्षवराः प्रवीरा
हनूमदाद्या जगतोऽभिवन्द्याः।
कापेयमेषां[1] च मनुष्यवाक् च
वीर्यं च विस्मापयते[2] जनौघान्।। १४।।

सन्त्यत्र सम्पातिजटायुकल्पा
गृध्रा विहङ्गा अपि ये प्रवीराः।
नियुध्यमानाः सह रावणेन
प्राणान् जहुः स्वान् स्वजनैकचित्ताः।। १५।।

आकाशचारिष्वपि येषु मैत्री
मानुष्यके विस्मयमादधाति।
स्नुषेति ये स्वस्य सुहृज्जनस्य
स्नुषां स्वकीयां कलयाम्बभूवुः।। १६।।

असूञ्जहुस्ते प्रणयं न तेषां
स्फूर्तिः परा शीर्णकलेवरेऽपि।
प्राणात्ययं ते रुरुधुर्बलेन
रामस्य सम्प्राप्तिमुदीक्षमाणाः।। १७।।

विहङ्गमा वा पशवोऽथवा ऽपि
शाखामृगा वा ऽप्यसुराधिपा वा।
मनुष्यवाचैव परस्परेण
सम्भाषणाद्विस्मयमावहन्ति।। १८।।

न केवलं मानुषभाषया ते
ऽवदन्नयुः प्रौढिमथापि तत्र।

---

१. कर्पेर्भावः कर्म वेत्यर्थे कपिज्ञात्योर्ढक् (५.१.१२७) इत्यनेन ढक्।
२. भीस्म्योर्हेतुभये १.३.६८ इत्यनेनात्मनेपदम्।

अनन्यसाधारणकोटिरूढां
रामायणीयाऽत्र गिरा[१] प्रमाणम्।। १९।।

सीतामुपायान् हनुमानुपायान्
विचिन्तयामास कया नु वाचा।
तया स सम्भाषणमारभेत
गिरा सुराणामथवा कपीनाम्।। २०।।

व्यचिन्तयत्संस्कृतया गिराऽहं
सम्भाषणं चेत्प्रकरोमि तेन।
अनिष्टमेवापतितं भवेन्नु
सह्यं भवेद्यन्न कथञ्चिदेव।। २१।।

इत्थं कृते वर्त्स्यति[२] बुद्धिभेद-
स्तस्या यतो मां प्रतिपत्स्यते सा।
नायं कपी[३] रावण एष बिभ्रत्
कपिस्वरूपं समुपागतो माम्।। २२।।

रूपाणि नाना ऽसुरवंशजाता
मायावशाच्छद्मपराः श्रयन्ति।
प्रवर्तयन् संस्कृतया गिराऽयं
वाचं स्वकां रावण एव नूनम्।। २३।।

धृत्वा कपे रूपमिह प्रपन्नो
मद्वञ्चनायेति भयं प्रपन्ना।

---

१. भागुरिमते प्रयोगः–आपं चैव हलन्तानां यथा वाचा निशा दिशा।
२. वृद्भ्यः स्यसनोः (१.३.९२) इत्यनेन परस्मैपदे न वृद्भ्यश्चतुर्भ्यः (७.१.२९) इत्यनेन इडभावः।
३. रो रि (८.३.१४) इत्यनेन प्रथमरकारलोपे ढ्रलोपे पूर्वस्य दीर्घोऽणः (६.३.१११) इत्यनेन कपेरिकारस्य दीर्घत्वम्।

न मिश्रयेन्मद्वचसा स्ववाचं
सेत्येव बुद्धिं समशिश्रियत्सः ।। २४ ।।

एतेन तस्य क्षमताऽऽविरस्ति
सम्भाषितुं संस्कृतया गिराऽपि ।
पुनः प्रसङ्गान्तरतस्त्वमुष्य
ततोऽपि भूयः परिलक्ष्यते सा ।। २५ ।।

श्रुतं भवेन्नूनमनेन कृत्स्नं
हनूमता व्याकरणं यतो हि ।
चिरं बहु व्याहरता ऽप्यनेन
नैवापशब्दः समुदीरितोऽभूत्[1] ।। २६ ।।

दूतादिकर्मण्यपि तस्य वाक्यं
कपेर्मुखान्निर्गलितं निशम्य ।
तुष्टाव तुष्टो रघुवंशनाथ-
तत्तर्कशक्तिं विदुषामगम्याम् ।। २७ ।।

असम्भवं हेममृगस्य जन्म
तथाऽपि दैत्यो बिभराम्बभूव ।
मारीचनामा ऽसुरराजवंश्य-
स्तद्रूपमासन्नविपत्तिविद्वान् ।। २८ ।।

आरात्कुटीरस्य विदेहपुत्र्या-
स्तच्चित्तमाक्रष्टुमयं कुरङ्गः ।
प्रतप्तचामीकरगात्रयष्टि-
र्लीलाः प्रकुर्वन् विविधाश्चुकूर्दे ।। २९ ।।

---

१. अत्र नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ।।
इति रामायणीयं (२.३.२९) पद्यं परिवृत्योपन्यस्तम् ।

श्रीरामलीलाभिनयप्रसङ्गे
दृश्यं यदा द्रष्टृजनो विमुग्धः।
सम्पश्यतीदं प्रमुदामपारा-
माटीकते कोटिमसौ तदानीम्।। ३१।।

लङ्केश्वरो दाशरथिर्यदा च
नाट्यप्रयोगे व्यतिजघ्नतुर्द्राक्।[1]
इषुप्रहारैः प्रखरैस्तदाऽपि
मुदां भरं द्रष्टृजनः प्रयाति।। ३२।।

ब्रह्मास्त्रसम्प्रेषणतो यदा च
रामो दशास्यस्य निकृन्तति द्राक्।
एकैकशस्तद्दशसङ्ख्यकानि
मुखानि लोकस्य तदाऽपि हर्षः।। ३३।।

यदा च पापप्रतिमानभूतो
ज्वालावलीढत्वमुपैति दैत्यः।
तद्दाहजातं जनतान्तरङ्गे
विस्फोटजातं मुदमातनोति।। ३४।।

श्रीरामभद्रस्य कथां विचित्रां
विचित्रपात्रावलिचित्ररूपाम्।
प्रयोगमापय्य जनः सुखेन
श्रीरामभद्रस्मरणं विधत्ते।। ३५।।

अद्यान्तिमं रामकथाप्रयोग-
पुण्यं दिनं गुण्य[2]जनाभिरम्यम्।

---

१. न गतिहिंसार्थेभ्यः (१.३.१५) इत्यनेन कर्तरि कर्मव्यतिहारे (१.३.१४) इत्यतः प्राप्तस्यात्मनेपदस्य निषेधः।

२. प्रशस्तगुणसम्पन्नैरित्यर्थः। रूपादाहतप्रशंसयोर्यप् (५.२.१२०) इतिसूत्रे अन्येभ्योऽपि दृश्यत इति वार्तिकेन यप् प्रत्ययः।

अस्मिन् दिने काव्यकृतां वरेभ्यः
समर्पयेऽहं शुभकामनाः स्वाः।। ३६।।

सदा भवन्तः सुखिनो भवन्तु
सार्धं कुटुम्बेन सुहृज्जनैश्च।
हस्तावचेयं च यशोऽवदातं
विन्दन्तु वर्धिष्णु सदैव लोके।। ३७।।

इत्येव तावद्विनिवेद्य सत्सु
सदा सदाचारपरायणेषु।
सत्यव्रतो दिल्लिपुराधिवासी
न वक्तुकामोऽस्म्यधिकं विधिज्ञाः!।। ३८।।

(अनुष्टुब्वृत्तम्)

भवतां भ्रातृजायाऽपि भवत्स्नेहवशंवदा।
प्रजावत्यै भवद्भ्यश्च दत्ते स्वाः शुभकामनाः।। ३९।।

(वैतालीयवृत्तम्)

प्रभुनिध्यानपरायणा सती
नियतं प्रार्थयते हि सा सती।
कुशलं क्षेम च नः कुटुम्बयो-
स्त्वरितं सुखदं च सङ्गमं पुनः।। ४०।।

दिल्लीस्थान् डा० कृष्णलालमहाभागान् प्रति २५.१०.२००७ दिनाङ्के प्रेषितं पत्रम्

प्रिया बन्धुवर्याः,

सस्नेहाशिषः।

(उपजातिवृत्तम्)

पत्रं समासाद्य महान् प्रमोदो
मदीयचित्ते प्रसृतिं गतोऽभूत्।
वाचा स नो वर्णयितुं कथञ्चि-
च्छक्यो यतः सोऽनुभवैकवेद्यः।। १।।

कायेन नौ यद्यपि भेद आस्ते
तथापि सं नौ मनसी स्थिते स्तः।
समश्च नौ मन्त्र इति प्रकामं
स्नेहानुषङ्गः प्रसरीसरीति[1]।। २।।

संसेव्यमानेऽप्यगदे मदीयो
निरन्तरं नो गद एति शान्तिम्।
अशान्तिमेतत्प्रबलां मदीये
दुःखाकरां चेतसि तन्तनीति[2]।। ३।।

दिने दिने ह्रासमुपेयिवांसं
कायस्य सामर्थ्यमवेक्ष्य भूयः।

---

१. सृधातोर्यङ्लुकि रूपम्। ऋतश्च (७.४.९२) इत्यनेन रीगागमः। यङो वा (७.३.९४) इत्यनेन ईडागमपक्षे रूपम्।

२. तनेर्यङ्लुकि रूपम्।

प्रवर्तितव्यं कथमत्र ताव-
न्मयेति चिन्तां महतीं गतोऽस्मि।।४।।

कासो न शान्तिं मम तात! याति
नानौषधानां परिषेवणे[१]ऽपि।
तत्सेवनादन्यरुजोऽप्यनेका
अकल्पिताः प्रस्फुटिता भवन्ति।।५।।

कायोऽस्ति पित्तप्रकृतिर्मदीयः
पित्तं तदाङ्ग्लौषधसेवनेन।
वृद्धिं प्रयातीति तदा तदुत्था-
स्त्वचो विकाराः प्रकटीभवन्ति।।६।।

एकस्य कष्टस्य न यावदन्तं
तावद् द्वितीयं प्रखरं ततोऽपि[२]।
प्राकट्यमेतीति विचिन्त्य चित्ते
महान् विषादः पदमादधाति।।७।।

कालप्रभावात्सुतरामभावो
वैद्यादिकानां परिदृश्यतेऽद्य।
ये नाम लोके यदि सन्ति तेऽपि
स्वं डाक्टरं ख्यापयितुं प्रवृत्ताः।।८।।

वैद्येतिसञ्ज्ञां परिहर्तुकामाः
स्वमानहानिं परिवीक्ष्य तत्र।
उरश्श्रवादिं[३] परिगृह्य यन्त्र-
व्रजं चिकित्सानिरता भवन्ति।।९।।

---

१. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् (९.३.७०) इत्यनेन सस्य षत्वे अट्कुप्वाङ्नुम्व्यवायेऽपि (८.४.२) इत्यनेन सस्य षत्वम्।

२. 'एकस्य दुःखस्य न यावदन्तं तावद् द्वितीयं समुपस्थितं मे' (हितोपदेशः, मित्रलाभः, पद्यम् २०८ इत्यस्यच्छायात्र।

३. उरश्श्रवयन्त्रमिति आङ्गल 'स्टेथिस्कोप' इत्यस्य कृते स्वकल्पितः शब्दः।

काष्ठौषधानि स्वचिकित्सने ते
नैवाश्रयन्तीति निभाल्य तेषाम्।
पाश्चात्यरीत्यैव रुजां चिकित्सा-
विधौ प्रवृत्ती[1] रुजमातनोति।। १०।।

नाडीपरीक्षादि रुजां निदाने
न ते कदाचित्समुपाश्रयन्ति।
तज्ज्ञानशून्याश्चरकादिशास्त्रं
रुजां निदाने न त आश्रयन्ति।। ११।।

परम्पराप्राप्तमतोऽस्मदीयं
ज्ञानं क्रमेण ह्रसिमानमापत्।
आपद्गतानां परिरक्षणार्थं
नैवोपयुक्तं परिलोपमेयात्।। १२।।

पुरातनज्ञानविलोपजन्यं
भवेदनिष्टं सुमहत्स्वदेशे।
देश्यश्चिकित्साविधिरेव लोके
श्रेयान्न पाश्चात्यविधिः कथञ्चित्।। १३।।

तथाऽपि तत्रैव जनप्रवृत्तिं
दुराग्रहग्राहगृहीतरूपाम्।
संलक्ष्य वैद्या अपि वित्तकामाः
पाश्चात्यरूपं समुपाश्रयन्ति।। १४।।

हिमार्दिताश्शीतवशं गताश्च
पाश्चात्यदेशा बहुवृष्टिकाश्च[2]।

---

१. प्रवृत्तिः रुजामितिच्छेदः। रोरि (८.३.२४) इत्यनेन प्रथमरकारलोपे ढ्रलोपे पूर्वस्य च दीर्घोऽणः (६.३.१११) इत्यनेन इकारस्य दीर्घः।

२. उरः प्रभृतिभ्यः कप् (५.४.२५१) इत्यनेन बहुव्रीहौ कप्। 'बह्वी वृष्टिर्येषु' इत्यर्थः।

यदौषधं तत्र भवेत्प्रभावि
देशेऽपि नः स्यात्किमु तत्तथैव?।। १५।।

अत्रत्यदशे जलवायुभेदो
देशान्तरौघादिति वेद लोकः।
तथापि तत्रत्यचिकित्सनस्य
स पद्धतिं संश्रयते विमूढः।। १६।।

श्रेयान् स्वधर्मो विगुणोऽपि तावत्
परस्य धर्मः सगुणोऽपि नैव।[1]
स आत्मनीनो[2] न भवेत्कथञ्चिद्
भयावहोऽसावत ईरितोऽस्ति।। १७।।

चिकित्सनं पश्चिमदेशरीत्या
रोगोपचारं त्वरितं तनोति।
मिथ्या प्रपद्येति विचारमेनं
तदाश्रयार्थं क्रमते[3]ऽद्य लोकः।। १८।।

विचारमूढः स न पश्यतीदं
यत्तेन रोगोपशमेऽपि तूर्णम्।
निर्मूलता तस्य न बोभवीति[4]
कालेन तस्याङ्कुरणं पुनश्च।। १९।।

भूयः स रोगोऽङ्कुरितः क्रमेण
विवर्धते वह्निकणो यथैव।

---

१. अत्र श्रीमद्भगवद्गीतायाः "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" (३.३५) इत्यस्यच्छाया।

२. आत्मने हित इत्यर्थे आत्मन्विश्वजनभोगोत्तरपदात् खः (५.१.९) इत्यनेन खप्रत्ययः। तस्य चेनादेशः।

३. वृत्तिसर्गतायनेषु क्रमः (१.३.८८) इत्यनेन सर्गार्थे (= उत्साहार्थे) आत्मनेपदम्।

४. भूधातोर्यङ्लुकि प्रयोगः।

चिकित्सकैः साधु चिकित्सितोऽपि
नानौषधाद्यैः शममेति नैव।। २०।।

न केवलं स्यादिदमेव कष्टं
तेनेति सन्तः प्रविभावयन्तु।
तज्जन्यरोगा इतरेऽप्यनेके
दुःसाध्यरूपाः प्रकटीभवन्ति।। २१।।

रोगाज्जनोऽन्यं समुपेयिवान् सन्
रोगं महत्कष्टकरं ततोऽपि।
धनव्ययेनापि न शान्तिमाप्य
यथा कथञ्चिन्नयति स्वकालम्।। २२।।

पाश्चात्यरीत्या हि रुजां निदानं
प्रवर्तते यन्त्रपरीक्षणेन।
भूरि व्ययो यत्र भवेज्जनस्य
न निश्चयः स्याच्च रुजां निदाने।। २३।।

स्वदेशरीत्या तु भिषग्वरेण्या
नाडीपरीक्षाविधिनैव तावत्।
चक्रू[1] रुजः सूक्ष्मतया निदानं
चिकित्सनं चापि मितव्ययेन।। २४।।

आचारवन्तो न धनायिता[2]श्च
परार्तिदूरीकरणैकचित्ताः।

---

१. रोरि (८.३.१४) इत्यनेन प्रथमरकारलोपे ढ्रलोपे पूर्वस्य दीर्घोऽणः (६.३.१११) इत्यनेन पूर्वोकारस्य दीर्घः।
२. अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु (७.४.३४) इत्यनेन क्यजन्तो धनायशब्दो निपात्यते।

स्वकीयविद्याफलमेतदेव
वैद्याः पुराणाः कलयाम्बभूवुः।। २५।।

विद्यामधीते[1] इति वैद्यशब्द-
निरुक्तिमार्याः प्रतिपादयन्ति।
यो वेद विद्यामि[2] ति चापरां ते
निरुक्तिमस्य प्रवदन्ति सन्तः।। २६।।

सा नाम विद्या परदुःखशान्ति-
र्भवेद्यया तत्फलमस्ति तस्याः।
नार्तस्य किञ्चित्प्रतिभाति लोके
विद्या अतोऽन्या अफला अपुष्पाः।। २७।।

बुद्ध्वेति मन्ये सुविचारवद्भि-
र्विद्याः समस्ताः सुपरीक्ष्य सद्भिः।
परार्तिहारिप्रवणैः कृतायु-
र्वेदोऽस्ति विद्येति कृताभिधानः।। २८।।

सूक्ष्मेक्षिकां प्राक्तनचिन्तकाना-
मेषा ऽभिधा स्पष्टतया व्यनक्ति।
अनेकविद्यासु सतीषु कस्माद्
विद्येत्यभिख्यां नहि काऽप्यलब्ध।। २९।।

पूर्वे पुरा दुर्गमकाननेषु
भयावहश्वापदसङ्कुलेषु।
आहिण्डमानाः श्रमकर्शिताश्चा-
प्यन्वेषणे ऽदुर्मन ओषधीनाम्।। ३०।।

कथं नु तैर्ज्ञातमिदं, रुजोऽस्या
एषौषधिः स्याच्छमने क्षमेति।

---

१. स्पष्टीकरणार्थमत्र सन्धिः परिहृतः।

२. तदधीते तद्वेद (४.२.४९) इत्यनेन अधीते वेद चेत्यनयोरर्थयोरण्।

कथं नु तच्छक्तिपरीक्षणं तैः
कृतं भवेत्पूर्वयुगेषु पूर्वैः।। ३१।।

कथं नु तेभ्यो विविधानि नाम-
धेयानि दत्तानि पुरा पुराणैः।
जनैः किमाश्रित्य कथं च तेषां
कृता परीक्षा गुणदोषतश्च।। ३२।।

विद्वद्वरैरद्य विचार्यमाण-
मेतन्महाश्चर्यमवातनोति।
वनेष्वसङ्ख्या विलसन्ति वल्ल्यो
वनस्पतीनां ततयश्च हन्त!।। ३३।।

बम्भ्रम्यमाणा विपिनेषु पूर्वे
दृशोरनैषुर्विषयं पुरा ताः।
तासां प्रयोगे स्वमनश्च तेऽधू
रोगोपशान्त्येकपरत्वबुद्धेः।। ३४।।

पुरा प्रयोगा विहिता भवेयू[१]
रोगाभिभूतेषु जनेषु तैर्नु।
रोगापकारक्षमता च तासां
निर्धारिता स्याद् बहुयत्नपूर्वम्।। ३५।।

रोगस्य शान्त्याय[१]मुकौषधिः स्यात्
तत्सेवनं लाभकरं भवेन्नु।
रोगेष्वनेकेषु परीक्षणेन
तैर्निश्चितं स्यात् सुविचारवद्भिः।। ३६।।

---

१. रोरि (८.३.१४) इत्यनेन प्रथमरेफलोपे ढ्रलोपे पूर्वस्य दीर्घोऽणः (६.३.१११) इत्यनेनोकारस्य दीर्घः।

१. शान्त्यै अमुकौषधिः इतिच्छेदः।

रोगोपचारे यदि नैकया स्याद्
योज्येयमन्याभिरपीति बुद्ध्वा।
अनेकयोगाः परिकल्पितास्तै-
र्विद्वद्वराणां धुरि कीर्तनीयैः।। ३७।।

प्रादुर्भवेयुः कफवातपित्त-
प्रकोपजाः कायविकारपूगाः।
एतत्समन्तादवधार्य चित्ते
रुजां चिकित्सां व्यदधुः स्वकां ते।। ३८।।

शास्त्रे स्वके निर्दिदिशुश्च ते स्यात्
कफादिकोपस्य कथं निरोधः।
समत्वमेषां च कथं प्रसिध्ये-
दित्येतदर्थं व्यदधुश्च पथ्यम्।। ३९।।

प्रादुर्भवेन्नैव गदः कथञ्चित्
पथ्यं बुधः संश्रयते जनश्चेत्।
गते गदे स्यादगदङ्कृतो नो
काऽपि व्यपेक्षेत्यवदातमेव।। ४०।।

आहारशुद्धौ खलु सत्त्वशुद्धिः[१]
सत्योद्य[२]मेतद्वचनं पुराणम्।
जनैः सदा भाव्यमवश्यमेवा-
हारस्य शुद्धौ वहितैः[३] प्रकामम्।। ४१।।

---

१. छान्दोग्योपनिषद् (३.१.१०६) वच एतत्।

२. वदः सुपि क्यप् (३.१.१०६) इत्यनेन क्यप्।

३. वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा।।
इति भागुरिमतेन अवहिताकारलोपे वहितशब्द उपात्तः।

स्वस्यानुकूलं भुवि यद्यदस्ति
तदेव सेव्यं स्वहिताभिकामैः।
यद्वा भवेत्तत्प्रतिकूलमद्धा[1]
तद्वर्जनीयं विषवत्सदैव।।४२।।

जनः स्वयं वेत्ति किमस्ति तस्या-
हितं हितं वा किमु वा ऽनुकूलम्।
किं वाऽथ तस्य प्रतिकूलमस्ति
विवेकशक्तिः प्रकृतिप्रदत्ता।।४३।।

यद्येष नेदं प्रविवेक्तुमर्हो
नाम्ना मनुष्यः पशुरेव सोऽयम्।
विवेकतः स्यादुभयोर्विवेक-
स्तदन्यथात्वे न भिदाऽनयोः स्यात्।।४४।।

एवं विवेकं पुरतो निधाय
हिताहिते स्वे प्रविचार्य सूक्ष्मम्।
यदात्मनीनं[2] भविकं च तत्र
प्रवर्तनीयः प्रबलात्मनाऽऽत्मा।।४५।।

आहारमात्रे नहि सावधान-
तया प्रवर्त्यं स्वहिताय पुंसा।
व्यायाम एवापि तथैव वृत्यं
कायस्य पुष्टत्वमयं तनोति।।४६।।

---

१. अद्धा इत्यस्य विनिश्चयेनेत्यर्थः।
२. आत्मने हितमित्यर्थे आत्मन्विश्वजनभोगोत्तरपदात्खः (५.१.९) इत्यनेन खः। तस्य चेनादेशः।

व्यायामपुष्टाखिलगात्रकस्य[1]
पद्भ्यां तथोद्वर्तितकायकस्य।[2]
न व्याधयः पार्श्वमुपाव्रजन्ति
सरीसृपौघा गरुडस्य यद्वत्[3] ।।४७।।

योगेन चित्तस्य मलं विसर्ज्य
मलं शरीरस्य च वैद्यकेन।[4]
चित्तेन कायेन च शुद्धिमाप्तो
जनः सुखी यापयति स्वकालम्।।४८।।

जनेन नित्यं परिपालनीया
यमाश्च सर्वे नियमास्तथा च।
एवं स्थिते कष्टपरम्पराभ्यो
मुक्तिर्भवेत्तस्य चिराभिकाम्या।।४९।।

लोभाय नैनेन कदापि चित्तं
कामाय वा देयमथो मदाय।
इमेऽन्तरङ्गस्य हरन्ति शान्तिं
रोगाननेकाञ्जनयन्ति चापि।।५०।।

चित्ते प्रशान्तेऽथ शरीरशान्ति-
राभाणकोऽयं प्रथितोऽस्ति लोके।

१. अत्र बहुव्रीहौ उरःप्रभृतिभ्यः कप् (५.४.१५१) इत्यनेन कप्। गात्रशब्दः शरीरवाच्यपि तदवयववाच्यपि च। अत्र तदवयवार्थे प्रयुक्तः।
२. अत्रापि पूर्ववत् उरःप्रभृतिभ्यः कप् (५.४.१५१) इत्यनेन कप्।
३. अत्र प्राचीनं
व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः।। इति लोकप्रसिद्धं पद्यं रूपान्तरेणोपन्यस्तम्।
४. योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन इति विज्ञानभिक्षुकृतयोग-वार्तिकस्थप्रथमपद्यांशं मनसिकृत्य पद्यमिदं विरचितम्।

अशान्तचित्तस्य जनस्य सत्यं
विकारमायाति हि रक्तचापः ।। ५१ ।।

विकारमस्मिन् समुपेयुषि द्राग्
रोगा अनेके प्रकटीभवन्ति।
दुःखस्य कष्टस्य च कारणं ये
मुक्तिं यतो वाञ्छति सर्वलोकः ।। ५२ ।।

चित्तस्य कायस्य ततो द्वयोश्च
स्वास्थ्यं समीहेत जनो हितार्थी।
एकत्र जाते हि विकारजाते
ऽपरत्र तस्य प्रभवो भवेद् द्राक् ।। ५३ ।।

भवन्ति वंशप्रभवा अनेके
रोगाः कठोरा बहुयत्नसाध्याः।
हृद्रोग एको मधुमेह एकः
कर्क[1]स्तथैक 'श्चैड्स' रोग एकः ।। ५४ ।।

स्वसन्ततौ सङ्क्रमणं भवेन्नो
एषामिति ध्यानपरेण पुंसा।
स्वास्थ्यं तथा कल्पयितव्यमेतद्-
भवो भवेन्नो भवदुःखकारी ।। ५५ ।।

दुष्कर्मणां पूर्वभवे कृतानां
रुजः फलं सन्ति हि जन्मनीह।
यद्यत्कृतं पूर्वभवे जनेन
भोग्यं फलं जन्मनि तस्य तस्य ।। ५६ ।।

प्राग्जन्मपापानि हि जन्मनीह
व्याध्याधिरूपेण जनं दशन्ति।

१. कैंसर इत्याङ्गलभाषायाम्।

पुरातनानां चरकाद्यृषीणां
वचः प्रमाणत्वमिहोपयाति।।५७।।

सदा सदाचारपरेण भाव्यं
जनेन तस्मादिह जन्मनीति।
व्याख्यानपेक्षं बहु नेति तस्माद्
वचोविरामः प्रवितन्यतेऽत्र।।५८।।

अल्पं विवक्षन्नपि बहु यद्वचो ऽहं
प्रावर्तयं तत्र न वेद्मि हेतुम्।
स्नेहः कदाचिद्भवतां दृढोऽत्र
सम्प्रेरणे कारणतामियर्ति।।५९।।

(अनुष्टुब्वृत्तम्)

इत्येव विनिवेद्याहं स्नेहसिक्तेन चेतसा।
आशीराशिं प्रयुञ्जानो वचः स्वमुपसंहरे।।६०।।

सदा भवन्मङ्गलाभिलाषुकः
सत्यव्रतः

दिल्लीस्थान् डा० चन्द्रभूषणझामहाभागान् २५.१०.२००७ दिनाङ्के प्रेषितं पत्रम्

प्रिया डा० चन्द्रभूषण झा महाभागाः
सस्नेहाशिषः

(इन्द्रवज्रावृत्तोपजातिवृत्ते)
(उपजातिवृत्तम्)

चर्चा ऽवृत[1]न्नावपरेद्युरेव
यत्रासुसूचं भवतोऽहमार्यान्।
नूत्ना मदीया कृतिरस्ति पूर्णा
या मुद्र्यते सम्प्रति मुद्रकेण।। १ ।।

नवीनदृष्ट्या मयका[2] निरैक्षि
गीर्वाणगीर्वाङ्मयविस्तरोऽत्र।
नूत्नं मयोद्भावितमत्र भूरि
विद्वद्वरेभ्यो[3] यदलं स्वदेत।। २ ।।

सन्त्येव नाना विषयाः समृद्धाः
समीक्षकैर्ये सुपरीक्षिता नो।
तत्रावधाने परिदीयमाने
किञ्चिन्नवीनं स्फुरति प्रयत्नात्।। ३ ।।

---

१. द्युद्भ्यो लुङि (१.३.९) इत्यनेन परस्मैपदे पुषादिद्युताद्य्लृदितः परस्मैपदेषु (३.१.५५) इत्यनेन चङि रूपम्।
२. अव्ययसर्वनाम्नामकच् प्राक् टेः (५.३.७१) इत्यनेनाकचि रूपम्। अकच् स्वार्थे। मयेत्यर्थः।
३. रुच्यर्थानां प्रीयमाणः (१.४.३३) इत्यनेन चतुर्थी।

विभूषिता संस्कृतसञ्ज्ञका गी-
नीत्रास्त्यपभ्रंशकृतो विकार:।
विद्वद्वराणां बहुशो विचार
एतादृशो यो बहुसम्प्रचार:।।४।।

नायं समीचीन इति प्रयत्नात्
कृतौ स्वकायां मयका न्यरूपि।
अनेकधा प्राकृतवाक्प्रपञ्चो
गिरा सुराणां तत आत्त एव।।५।।

गेहेतिशब्दो गृहशब्द एव
नेमौ पृथक्शब्दतया गृहीतौ।
एकाररूपत्वमभिप्रपन्न
उच्चारणे दोषवशाद् ऋवर्ण:।।६।।

नेपालशब्देऽपि तथैव जातं
याथार्थ्यतोऽस्त्येष नृपालशब्द:।
शब्दा अनेके विगुणेषु वक्तृ[१]-
ष्वनेकरूपाणि समाश्रयन्ति।।७।।

प्रदर्शिताचार्यवरेण सिद्धि:
पाणिन्यभिख्येन गृहस्य तावत्।
गेहस्य नेतीति विचारमेतं
तत्सूत्रमेव प्रथयत्यवश्यम्।।८।।

ग्रह्धातुत: को विहितो विपश्चि-
दुद्धेन[२] गेहार्थ इति प्रकाशम्।

---

१. तथाऽऽह भर्तृहरि:-पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु। प्रसिद्धिमागता:-वाक्यपदीयम्, १.१५४।

२. विपश्चिदुद्धेन विद्वत्प्रकाण्डेनेत्यर्थ:। तथा चामर:-मतल्लिकामचर्चिका-प्रकाण्डमुद्धतल्लजौ (१.३.२७)।

गृहस्य सिद्धिः परिदर्शितास्ति
गेहस्य नेतीति विचित्रमेतत्।। ९।।

प्रायोजि शब्दोऽर्थनिदर्शनार्थ-
मयं बुधप्रयेण न साधितश्च।
गुत्सादिशब्दा अपि गुच्छरूप-
तया गृहीताः खलु संस्कृतेन।। १०।।

न केवलं प्राकृतशब्दजालं
गृहीतमेनेन ततोऽपि भूयः।
भाषान्तरेभ्यो ऽपि निरन्तरेणा-
त्मसात्कृता नैकविधा पदाली।। ११।।

न लिख्यते ह्यत्र विना प्रमाणं
किञ्चित्ततो ऽहं कतिचिद्धि शब्दान्।
गीर्वाणवाण्यान्यगिरो गृहीतान्
निदर्शनार्थं समुदाहरामि।। १२।।

आरब्यशब्दः कलमोऽस्ति लेख-
न्यर्थे गृहीतः सुरवाचया[1]ऽपि।
तथाहि कोषे ऽभिहितं पुराणे-
मेदिन्यभिख्ये यदुदाहरामि।। १३।

"कलमः पुंसि लेखन्याम्"

बन्दीतिशब्दो ऽपि न मूलतोऽस्ति
गिरः सुराणामिति बोधनीयम्।

---

१. भागुरिमतेन आप्प्रत्ययान्तं वाच् शब्दं (वाचा इति) मत्वा तस्य तृतीयायां प्रयोगः।
[वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा।।]

पारस्यभाषागत एष शब्द-
स्ततो गृहीतः सुरभाषयाऽस्ति।। १४।।

शब्देन मूलात्परदेशजेन
संयोज्यते नाम गृहादिशब्दः।
बन्दीगृहेत्यादिनवीनशब्दः
प्रकल्प्यतेऽस्मात्सुतरां प्रसिद्धः।। १५।।

क्रमेलशब्दोऽपि न संस्कृतस्य
हिब्ब्रुवा उपादीयत एष वाचः।
गमेलरूपं खलु तत्प्रयोगं
तद्वाचि धीराः परिदर्शयन्ति।। १६।।

'केमल्'स्वरूपेण हि तत्प्रयोगो
गिर्याङ्गलानां सुरवाच्यमुं तु।
ककारयोगेन जनः प्रयुङ्क्ते
दृष्टान्तमत्र प्रतिपादयामि।। १७।।

निरीक्षते केलिवनं प्रविश्य
'क्रमेलकः' कण्टकजालमेव।
म्लेच्छेति शब्दोऽपि गिरा सुराणां
मेसापोटेमीगिर उद्धृतोऽस्ति।। १८।।

दीनारकार्षापणपण्णकाद्य-
ग्रीस्देशभाषागतशब्दजालम्।
ततो गृहीतं सुरवाचया[1]ऽपि
तद्देश्यसम्पर्कवशात्पुराणात्।। १९।।

ग्रीस्देशसञ्ज्ञं[2] निकषैव देश-
मायोनसञ्ज्ञो लघुरस्ति देशः।

---

१. भागुरिमते प्रयोगः आपं चैव हलन्तानाम्।

२. अभितःपरितःसमयानिकषेत्यनेन द्वितीया।

तद्देशजा अत्र गताः प्रसिद्धिं
तद्रूपसाम्याद् यवनेतिनाम्ना।। २०।।

सम्प्रापिते संस्कृतरूपवत्त्वं
शब्दोऽस्त्ययं संस्कृतशब्द एव।
ङीप्प्रत्यये स्त्रीत्वविवक्षयाऽऽनुक्-
संयोजने स्याद्यवनानि[1]रूपम्।। २१।।

इत्थंप्रकारेण विदेशिशब्दा-
दङ्गीकृताद्वाचि पुरा निजायाम्।
ततोऽन्यशब्दाः स्वगिरोऽनुसारं
विनिर्मिताः सम्प्रययुः प्रसिद्धिम्।। २२।।

नक्षत्रशास्त्रीयपदावली च
विज्ञानशास्त्रीयपदावली च।
ग्रीकादिशब्दप्रचुरेति सर्वे
विमर्शकाः साग्रहमामनन्ति।। २३।।

ग्रीक्वाचि ओरेति पदं यदास्ते
तदेव होरा सुरवाचि जातम्।
तच्छास्त्रमाख्यां भजतेऽत्र होरा-
शास्त्रं प्रसिद्धिं परमां गतं यत्।। २४।।

नक्षत्रशास्त्रीयविदां वरेषु
श्रीरोमकाचार्य इति प्रसिद्धः।
बभूव कश्चित् कुशलः प्रवक्ता
प्रस्थापनं यः स्वमतस्य चक्रे।। २५।।

मतं तदीयं परमादरेण
तदीयनाम्नैव समुद्धरन्ति।

---

१. वस्तुतो यवनानीति रूपम्। समासवशादत्र ह्रस्वत्वम्।

श्रीरोमकाचार्यवरस्य सैष
सिद्धान्त इत्येवमुदारचित्ताः।। २६।।

यस्याः खनेरुत्खननेन लभ्यं
यत्सैन्धवाख्यं लवणं कठोरम्।
तस्याः कृते संस्कृतवाचि शब्दो
रुमेति रोमस्मरणं तनोति।। २७।।

ज्ञातो भवेदुत्खननप्रकारो
रोमाधिवासिभ्य इतीव सूक्ष्मम्।
सङ्केतयत्येष रुमेतिशब्दो
रोमोद्भवो भारतवर्षजातैः।। २८।।

मुद्रादिनिर्माणविधिस्तथा च
तैः शिक्षितः ग्रीकबुधाग्रगेभ्यः।
विभिन्नमुद्रागतनामधेय-
पूगस्तमेवार्थमभिव्यनक्ति।। २९।।

पारस्यदेश्यादिकृते प्रयुक्ता
गीर्वाणवाक्साम्प्रतिकाङ्गभूताः।
शब्दा नवीनाः खलु पारसीक-
रूपाः प्रयोगं गमिता जनेन।। ३०।।

एवं समृद्धिं गमितः क्रमेण
वागन्तरात् सांस्कृतशब्दकोषः।
इत्येव सोदाहरणं निजायां
कृतावहं विस्तरतोऽसुसूचम्।। ३१।।

बह्वन्यदप्यत्र विचारकोटि-
मापादितं यत्नवताऽतिसूक्ष्मम्।

सुधीजनेभ्योऽतिभृशं स्वदेत
यन् नात्र संशीतिलवोऽपि कश्चित्।। ३२।।

आग्नेय[१]भूखण्डविभिन्नभाषा-
कोषोऽपि वृद्धिं गमितः क्रमेण।
वाचा सुराणामिति तत्र दीर्घा
गीर्वाणवाक्छब्दततिः प्रमाणम्।। ३३।।

मूलस्वरूपेण हि तत्र केचि-
च्छब्दाः स्थिताः केचन चान्यरूपम्।
उच्चारणादेर्वशतः प्रयाताः
श्रोत्रे स्पृशन्तो मुदमावहन्ति।। ३४।।

पुत्रेति शब्दो नगरीति शब्दः
पुत्रीति शब्दो वनितेतिशब्दः।
शालेतिशब्दो विचयेतिशब्दः
स्वामीतिशब्दो नलिकेतिशब्दः।। ३५।।

एतादृशाः सन्ति परश्शता ये
शब्दाः शुभास्तत्समकोटिभाजः।
स्वकीयभाषाङ्गगतान् अनेकान्
अद्यापि यांस्तत्र जनः प्रयुङ्क्ते।। ३६।।

मनाक् स्वरूपे परिवर्तनेन
स्वकीयभाषाध्वनिसम्प्रयोगात्।
सम्पादितस्तद्भवतास्वरूपं
विशालसङ्ख्यः किल शब्दराशिः।। ३७।।

---

१. दक्षिणपूर्वेत्यर्थः। दक्षिणपूर्वेशियास्थथाइदेशेऽद्यापि किञ्चिदुच्चारणपरिवर्तनेन आखने इति रूपेणास्य शब्दस्य प्रयोगः।

दूरातिगस्तत्समशब्दराशेः
प्रयुज्यते तत्र सुखं जनेन।
स्वदेश्य एवेति मतं गतेन
तथा च तन्मूलमजानताऽपि।। ३८।।

क्वचित्पुनः संस्कृतमूलकौ द्वौ
तुल्यार्थकत्वेऽपि सहप्रयुक्तौ।
व्यङ्क्तो ऽर्थमेकं, परिदर्शनाय
दृष्टान्तमत्रैकमुदाहरामि।। ३९।।

थाय्वाचि कीर्तेः कियतीतिरूपम्
उच्चारणे भेदवशात् प्रसिद्धम्।
योच्छब्द आस्ते यश एव तावत्
तस्यैव रूपं परिवृत्तमेतत्।। ४०।।

संहत्य शब्दद्वयमत्र थाइ-
देश्या 'कियतियोत्' इति शब्दमेकम्।
यशोऽर्थबोधाय वदन्ति तावत्
तत्रेदृशी पद्धतिराविरस्ति।। ४१।।

लाओसदेशे किल कारणार्थे
हेद्कानशब्दो व्यवहारमेति।
हेदित्ययं संस्कृतहेतुशब्दः
कानस्तथा कारणशब्द एव।। ४२।।

क्वचिद्धि तुल्यार्थक एव देश्यः
संयोज्यते संस्कृतवाग्बलेन।
शब्देन, संहत्य च शब्दयुग्मः
प्रयुज्यते संव्यवहारकाले।। ४३।।

राङ्कायशब्दः खलु थांयिवाचि
कायार्थ एव व्यवहारमेति।

राङित्ययं तत्र तु थायिदेश्यः
कायस्त्वयं संस्कृतकाय एव।।४४।।

शब्दोऽपि कायार्थक एव देश्यो
राङित्ययं तेन कुतो व्यपेक्षा।
कायस्य गीर्वाणगिरागतस्य
सहप्रयोगस्तु तयोस्तथापि।।४५।।

एवं समीक्षाविधिमाश्रितः स-
न्नपूपुषं स्वं मतमत्र विज्ञाः!
दृष्टान्तधाराभिरहं विभिन्न-
भाषोद्गताभिः प्रधियां मुदे यत्।।४६।।

आग्नेयभाषासु विशालरूपो
विराजते संस्कृतशब्दराशिः।
पुरातने तद्गतवाङ्‌मये यो
विशेषरूपेण दृशोर्विभाति।।४७।।

(अनुष्टुब्वृत्तम्)

एवं बहुविधस्तत्र स्वग्रन्थे प्रतिपादितः।
सविस्तरेण विषयो रोचयेयुर्हि यं बुधाः।।४८।।

अल्पेनैव हि कालेन प्रयत्नलिखितो मया।
स ग्रन्थो विविधग्रन्थिभेदकः सूक्ष्मया दृशा।।४९।।

विद्वन्मनोविनोदाय प्रसिद्धिं समुपैष्यति।
तत्पश्चाच्चापरो ग्रन्थो मुद्रणायार्पयिष्यते।।५०।।

इत्येवोक्त्वा समासेन प्रह्वः सम्प्रार्थये प्रभुम्।
योगं क्षेमं च भवतां भवतापनिवारकम्।।५१।।

इति शुभाशिषो
भवद्गुणगणावर्जितहृदयस्य
सत्यव्रतस्य शास्त्रिणः

## २७.१०.२००७ दिनाङ्के दिल्लीस्थान् डा० चन्द्रभूषणझामहाभागान् प्रति प्रेषितं पत्रम्

**प्रिया डा० चन्द्रभूषण झा महाभागाः**
**स्वस्ति भवद्भ्यः।**

(इन्द्रवज्रोपजातिवृत्ते)

पत्रं मया यत् प्रहितं पुराऽभूत्
प्राप्तं भवद्भिस्तदिति प्रपन्नः।
पत्रान्तरं प्रेषयितुं भवद्भ्यो
व्यापारणायात्मन उद्यतोऽस्मि।। १।।

समानधर्मभ्य इहात्मनीन[1]-
जनेभ्य एव प्रकटीक्रियन्ते।
भावाः स्वकीया हृदयान्तरस्था
नैवात्र सन्देहलवोऽस्ति कश्चित्।। २।।

दुःखं जगत्यामिह सह्यपीडं
यथा भवेदिष्टजने विभक्तम्।
तथा विचाराः सहधर्मिषु द्राग्
विभज्यमानाः सुखमावहन्ति।। ३।।

तदर्थमेवात्र मम प्रवृत्तिः
स्वकं विचारं प्रविभक्तुमिष्टिः।
सैवात्र मय्यत्रभवत्सु पत्र-
सम्प्रेषणायोद्यममादधाति।। ४।।

भाषाव्रजे द्राविडनामधेये
सन्दृश्यते संस्कृतशब्दपूगः।

---

१. आत्मने हित इत्यर्थे आत्मन्विश्वजनभोगोत्तरपदात्खः (५.१.९) इत्यनेन खः।

य: संस्कृतस्य प्रचुरं प्रभावं
तद्वाक्समूहे प्रकटीकरोति।।५।।

यथा गृहीतो विपुलोऽस्ति शब्द-
राशिर्गिरः संस्कृतनामधेयात्।
सम्भावनीयं हि तथैव सत्यं
गिरा सुराणां द्रविडाख्यवाग्भ्यः।।६।।

सामान्यतोऽयं व्यतिहार[1] एव
भाषासु दृष्टेर्विषयं प्रयाति।
शब्दान् ददात्येव न काऽपि भाषा
नादत्त एषेति न सम्भवि स्यात्।।७।।

विद्वद्वरेण्यैर्विषयेऽत्र ताव-
च्चर्चामकार्षं द्रविडाभिजातैः।
नैकोऽपि तेषां विषयेऽत्र किञ्चिद्
वक्तुं क्षमोऽभूद् बहु चोदितोऽपि।।८।।

मीमांसितोऽयं विषयोऽद्य याव-
न्नास्माभिरस्मान्न वयं क्षमाः स्मः।
अत्रेति वाचं समुदीर्य सर्वे
तूष्णीं स्थिताः चिन्तयितुं च वृत्ताः।।९।।

आदत्त शब्दान्न हि संस्कृतं वाग्[2]
अल्पानपि द्राविडवाक्समूहात्।
सम्भाव्यते नैतदयं क्रमो न
विभिन्नवाक्सङ्गमने कदाचित्।।१०।।

---

१. व्यतिहारो विनिमयः। कर्तरि कर्मव्यतिहारे (१.३.१४) इत्यत्रायमेव शब्दः प्रयुक्त आचार्येण।

२. भाषावाची संस्कृतशब्दो नित्यनपुंसकलिङ्गः। तथा हि दण्डी-संस्कृतं दैवी वाक्, काव्यादर्शः; १.३३।

वाग्योगविद्भिर्मन एतदर्थं
व्यापार्यते चेद् गिरि देवतानाम्।
शब्दा अनेके द्रविडाभिजाता
सुधीभिरुन्नेतुमलं भवेयुः।। ११।।

गीर्वाणवाग्व्यापकशब्दपूग
एतद्दृशा सूक्ष्मतयाऽवलोक्यः।
गीर्वाणवाण्यां मलयादिशब्दा
यथार्थभावाद् द्रविडाभिजाताः।। १२।।

पूजेति शब्दो द्रविडोद्भवोऽस्ति
न मूलतः संस्कृतशब्द एषः।
भाषाविदः केचिदिह प्रपन्ना
इदं मतं यत्नत एवमाहुः।। १३।।

शब्देऽत्र शब्दद्वयमस्ति युक्तं
पूशब्दएकश्चेय् चाप्यथान्यः।
पूर्वस्तु पुष्पार्थमभिव्यनक्ति
परश्च कर्मार्थकतां दधाति।। १४।।

अर्थस्तु पूचेय्त्युभयोस्तदात्वे
स्यात्पुष्पकर्मेति मतं बुधानाम्।[१]
अर्च्चेति तस्मात् परिवर्तितोऽर्थो
व्यनक्ति पुष्पप्रमुखत्वमत्र।। १५।।

बभूव भूयः किल वेदकाले
प्राधान्यमाज्यस्य कृते मखस्य।
पुराणकाले समपाद्यताच्चर्चा
पुष्पार्पणैरिष्टसुरव्रजस्य।। १६।।

---

१. डा० सुनीतिकुमारचाटुर्ज्यामहाभागा एतन्मतं प्रतिपन्नाः।

तदाप्रभृत्येव बभूव पूजा-
शब्दप्रचारः सुरवाचि नूनम्।
पूजेति शब्दो द्रविडोद्भवोऽपि
गीर्वाणवागङ्गगतो विरेजे।। १७।।

अर्थस्य भेदो मलयेतिशब्दे-
ऽपि दृश्यते संस्कृतवाक्स्वरूपे।
अद्रेः समानार्थक एष शब्दः
सामान्यमद्रिं द्रविडेषु वक्ति।। १८।।

गीर्वाणवाच्यद्रिविशेषमेष
व्यनक्ति शब्दो मलयाचलेति।
भाषान्तरादुद्धृतशब्दपूगे
भवेयुरर्थान्तरसङ्क्रमा नु।। १९।।

विचार एतद्विषये चिकीर्ष्यो
मनीषिभिर्दीर्घतरं प्रशस्यः।
गीर्वाणवागङ्गगता तदा स्या-
ज्ज्ञाता ध्रुवं द्राविडशब्दङ्ख्या।। २०।।

(अनुष्टुब्वृत्तम्)

कार्यं जटिलमत्यन्तं श्रमसाध्यमथापि च।
अनल्पेनैव कालेन सम्पाद्येत कथञ्चन।। २१।।

नह्येकेन सुसम्पादमेतत्कार्यं बृहत्तरम्।
सूक्ष्मदृशा विविच्येह प्रक्रन्तव्यं भविष्यति।। २२।।

भाषाचतुष्टयं लोकः प्रयुङ्क्ते द्रविडोद्भवः।
न संस्कृतेन तस्यास्ति साम्यं शब्दोच्चयादृते।। २३।।

समृद्धं वाङ्मयं तत्र समृद्धा च पदावली।
समृद्धिश्चापि भावानां समृद्धिर्विदुषां तथा।। २४।।

तद्वाक्चतुष्टयाभिज्ञाः ज्ञातारः संस्कृतस्य च।
संस्कृतेऽन्वेषमन्वेषं शब्दान् द्रविडमूलकान्।। २५।।

अभिज्ञातुं प्रवर्तेरन् यदि यत्नं समाश्रिताः।
अवश्यमेव ते शब्दान् लभेरन् बहुसङ्ख्यकान्।। २६।।

संस्कृतादेव शब्दौघो गृहीतो द्रविडैरिति।
नैतत्सम्भाव्यते जाते सम्बन्ध उभयोरपि।। २७।।

आदानं च प्रदानं च मिथः सम्बद्धयोर्भवेत्।
तदेतत्सहजं नाम लोकस्यैषा हि पद्धतिः।। २८।।

एकयैव दिशा जातु प्रवृत्तिर्नैव सम्भवेत्।
विपरीतदिशाऽपि स्यात्सेति स्वाभाविकी गतिः।। २९।।

इदं मे दर्शनं तात! यन्मया प्रकटीकृतम्।
पत्रेऽत्रात्रभवत्यद्य भवान् प्रियतरो मम।। ३०।।

(मालिनीवृत्तम्)

इति विविधविचाराचान्तचेतःप्रवृत्तिः
चरमवयसि वीतः कायकष्टैरनिष्टैः।
जगति किमपि कार्यं तादृशं कर्तुमीहे
नहि कृतमभवद्यत्पूर्वविद्वज्जनाग्र्यैः।। ३१।।

किमिति बुधजना नो तादृशे कर्मणि स्व-
महमहमिकयैव प्रेरयन्तीति चित्रम्।
किमिति नवनवांस्ते प्राग् विमर्शं न यातान्
विविधविषयपूगान् नो विमर्शं नयन्ति।। ३२।।

नहि किमपि सुसाधं पिष्टसम्पेषणेन
बहुतिथसमयः स्याद्यापितो व्यर्थमेव।
यदि किमपि नवीनं नैव विज्ञातपूर्वं
भवति बुधजनाग्र्यैः स्थापितं तद्वरं स्यात्।। ३३।।

मतमिदमग्र्यं मान्यमान्यं ममास्ति
न विरतिरतिरस्ति श्रेष्ठकार्येभ्य एभ्यः।
अनुदिनमहमेतत्कार्यवृत्तौ प्रवृत्तः
प्रचुरसुखसमृद्धो यापयामि स्वकालम्।। ३४।।

(अनुष्टुब्वृत्तम्)

इत्येव विनिवेद्याहमाशिषः सम्प्रयुज्य च।
भवत्सु भव्यरूपेषु वाचं स्वामुपसंहरे।। ३५।।

सदा भवच्छुभाकाङ्क्षी
सत्यव्रतः शास्त्री

## २९.१०.२००७ दिनाङ्के शर्मण्यदेशस्थाञ्श्रीपायरमहाभागान् प्रति प्रेषितं पत्रम्

प्रियाः श्रीमन्तः पायरमहाभागाः।

स्वस्ति भवद्भ्यः।

(वसन्ततिलकावृत्तम्)

प्राप्तो मया नहि यतो भवतामुदन्त-
स्तेनातिचिन्तितमना विमनायितः सन्।
सम्प्रेषयामि भवतः प्रति पत्रमेतद्
यस्योत्तरं सुखकरं त्वरितं लषामि।। १ ।।

मार्गेरितासहचरा मुदिताः स्वकालं
शास्त्राणि सुष्ठु निपुणं परिशीलयन्तः।
श्रेष्ठेषु कर्मसु रता विधिवद्विधिज्ञाः
शान्तात्मना रसमयं समयं नयन्ति।। २ ।।

ट्यूबिंगने सकलमेव शुभावहं स्यान्
मित्राणि मे च सकलानि सुखं भवेयुः।
प्रत्येमि तावदिदमत्रभवत्सु रक्तः
सर्वः स्वबन्धुजनमङ्गलकामुकोऽस्ति।। ३ ।।

कच्चित् प्रिया मम विलक्षणशेमुषीकाः[१]
श्तीतन्क्रनेतिशुभनामधराः सखायः।

---

१. उरःप्रभृतिभ्यः कप् (५.४.१५१) इत्यनेन बहुव्रीहौ कप्। विलक्षणा शेमुषी (=बुद्धिः) येषामित्यर्थः।

कायेन वाङ्मनसयोश्च[1] सुखं वहन्ति
कच्चित्स्मरन्ति मम[2] चापि कथाप्रसङ्गे।।४।।

ट्यूबिंगनस्य मधुरा स्मृतिरस्ति मेऽन्त-
स्तत्राधिवासविषये बहु चर्च्चयामि।
मित्रैः स्वकैरिह, तदीयविचित्रशोभां
तान् वर्णयामि च चिरं प्रविमुग्धभावात्।।५।।

कारण्डवाकुलजलां शिथिलं वहन्तीं
नेकारनामकनदीम[3]भितो निविष्टम्।
श्यामायितं हरितशाद्वलभूमिभागैः
संवीजितं सुखकरैश्शिशिरैश्च वातैः।।६।।

आवेष्टितं कुसुमगुच्छभरातिनम्र-
शाखाविराजितफलौघतरुप्रतानैः।
नीराजितं च निकटस्थगिरिव्रजेना-
कल्प्यां ध्रुवं पुरमिदं सुषमां बिभर्ति।।७।।

उद्वेल्लयेन्मम मनः स्मृतिरस्य चेद्धोः!
स्वाभाविकं हि तदिदं नहि चित्रमत्र।
योऽप्यत्र रम्यनगरे स्थितिमातनोति
तस्य ध्रुवं स्मृतिरमुष्य मनो धवीत।।८।!

वर्षाणि मे व्यतिगतानि बहूनि तावद्
दूरे प्रयाति मनसः स्मृतिरस्य नो मे।

---

१. अचतुरविचतुरे (५.४.७७) त्यादिना निपातितस्य वाङ्मनसशब्दस्य षष्ठी-द्विवचने रूपम्।
२. अधीगर्थदयेशां कर्मणि ९२.३.५२) इत्यनेनाधीगर्थानां (=स्मृत्यर्थकानां) धातूनां योगे षष्ठीविधानम्।
३. अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति वार्तिकेन अभितोयोगे द्वितीया।

दिल्ल्यां स्थितोऽपि मनसा स्थितिमन्तमत्र
विद्वद्वरा! अनुभवामि निरन्तरेण।। ९।।

संस्थानमत्र लसति प्रतिमानभूतं
ज्ञानस्य भारतपुरातनवाङ्मयस्य।
ग्रन्थालयोऽत्र सुतरां गमितः समृद्धिं
रॉथादिकैर्बुधवरैर्लसतीह रम्यः।। १०।।

स्थित्वाऽत्र वर्षमहमापमपारहर्ष-
मध्यापिपं च निपुणान् सुबहून् स्वशिष्यान्।
ये साम्प्रतं विविधदेशगतेषु विश्व-
विद्यालयेषु पठकान्[२] किल पाठयन्ति।। ११।।

आचार्यपीठमधिरूढवतो निरीक्ष्य
तान् मे प्रनृत्यति मदेन मनोमयूरः।
शिष्यप्रकर्षवशतो ऽविदुषोऽपि तावत्
कीर्तिगुरोर्लसति दिक्षु विदिक्षु चापि।। १२।।

अत्राहमस्मि सुखितः सहपुत्रभार्यः
कालं नयामि बहुशोऽध्ययनादिकेन।
ग्रन्था मया विरचिता महता श्रमेण
नैके बुधेष्वजनयन् परमां मुदं ये।। १३।।

विद्वज्जनौघपरितोषफलः प्रयत्नः
सत्यं मया न कथनीयमिहास्ति भूरि।
शुद्धेः परीक्षणविधौ कनकस्य तावद्
अग्निः समर्थ इति को नहि वेद लोके।। १४।।

---

२. छात्रानित्यर्थः। ये पठन्ति ते पठकाः।

(वैतालीयवृत्तम्)

अथ सूचनयाऽनुगृह्यतां
कुशलं स्वस्य सुहृज्जनस्य च।
शिवता शिवतोऽर्थिता मया
पुनरेवाशु च सङ्गमः शुभः।।१५।।

(अनुष्टुब्वृत्तम्)

इति सम्प्रार्थ्य देवेशं बद्धाञ्जलिपुटः प्रभुम्।
एतैरेव पदैः स्वीयं कुर्वेऽहं वाक्यसङ्ग्रहम्।।१६।।

सदा भवन्मङ्गलाभिलाषी
सत्यव्रतः

### हरिद्वारस्थानाम् ऋषि केशवानन्दमहाभागानां सप्ततिवर्षपूर्त्यवसरे प्रेषिता ऋष्यभिनन्दनसप्तपर्णी

(मालिनीवृत्तम्)

निजगुणगणगरिमाणं ख्यापयञ् जीवलोके
विमलमतिरुदारो ज्ञानिनामग्रगण्यः।
ऋषिरिति पदवीधृक् तापसानां वरेण्यो
जयति जयति धन्यः केशवानन्दसंज्ञः।। १ ।।

भगवति दृढनिष्ठः सिद्धलोकोपसेव्यो
ननसि वचसि काये पुण्यपीयूषपूर्णः।
सकलजनहितार्थं खिद्यमानो ऽतिमात्रं
क्षपयति निजकालं सज्जनानां वरेण्यः।। २ ।।

दिशि दिशि विमला यत्कीर्तिरुद्गीयमाना
श्रवणकुहरमाप्ता मोदधारां तनोति।
अनवरतरतो यो धर्ममार्गे विपश्चिद्
दिशति जनसमूहं धर्मतत्त्वं तपस्वी।। ३ ।।

मृदुतरवचनोपन्यासपूर्वं स्वमन्यान्
श्रुतिवचनरहस्यं बोधयन् योऽतिगूढम्।
प्रवचनपटुतां स्वां बाढमाविष्करोति
विशकलितनिगूढानेकशास्त्रः सुखेन।। ४ ।।

सुविदितदृढभक्तिः सांस्कृते वाङ्मये यः
कलयति सुरवाचः शिक्षणं साधु साधुः।

तदतिरुचिरवाचः शिक्षणार्थं च विद्या-
लयमयमतिरम्यं चालयत्यात्मशक्त्या।।५।।

(अनुष्टुब्वृत्तम्)

यत्र विद्यालये छात्रा ब्रह्मचर्यतपोऽन्विताः।
एकतानेन मनसा संस्कृतं समुपासते।।६।।

ऋषिरेष चिरं जीव्याल्लोकसङ्ग्रहतत्परः।[1]
इत्यहं प्रार्थये प्रह्वः शङ्करं लोकशङ्करम्।।७।।

---

१. विधेर्विधानान्न विद्यते जीवलोकेऽयमृषिः सम्प्रति।

**डा० प्रभुदयाल्वग्निहोत्रिमहोदयानामभिनन्दनग्रन्थसमर्पणावसरे प्रस्तुतानि अभिनन्दनपद्यानि**

तिथेरत्रोल्लेखो नास्ति

(द्रुतविलम्बितवृत्तम्)

गुणसुगन्धसुवासितदिक्तटं
प्रतिभया परया च विभूषितम्।
विविधशास्त्रवगाहन[1]तत्परं
प्रभुदयालुगुरुं प्रणमाम्यहम्।। १ ।।

(उपजातिवृत्तम्)

सत्स्वप्यनेकेषु बुधप्रवेके-
ष्वनेन भूमिः सविशेषशोभा।
"नक्षत्रताराग्रहसङ्कुलाऽपि
ज्योतिष्मती चन्द्रमसैव रात्रिः"।। २ ।।

ह्रीरार्जवं मार्दवमात्मशुद्धि-
र्वाचां रहस्याकलने च शक्तिः।
परोपकारप्रतिबद्धता च
ग्रन्थादिनिर्माणविधौ च दाक्ष्यम्।। ३ ।।

मुखे च नित्यं स्फुटमन्दहासो
दीर्घा च दृष्टिर्विशदा च बुद्धिः।

---

१. भागुरिमतेनात्राल्लोपः-वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।

उदात्तता चेतसि चापि नित्यम्
अविप्रवासेन गुणा वसन्ति।।४।।

स्वभावसिद्धं सदसद्विवेकं
स्वाभाविकीं लोकहितप्रसक्तिम्।
अनन्यसामान्यमुदारभावम्
एषां प्रशंसन्ति जनाः सदैव।।५।।

ग्रन्था अनेके रचिता अमीभिः
शास्त्राण्यनेकानि च शीलितानि।
बुधैरनेकैश्च कृतो विमर्शो
देशेष्वनेकेषु कृता च यात्रा।६।।

आलोचितो ऽनेकदिशा च पूर्व-
ग्रन्थोत्करो ग्रन्थिविभेदनेन।
नैका दिशश्चापि गवेषणाय
गवेषणार्थिप्रकराय दिष्टाः।।७।।

येषु द्वयं श्रीश्च सरस्वती च
कुन्दावदातं प्रसृतं यशश्च।
मुखे च दिव्या सहजा च कान्ति-
स्तेजःप्रकाशस्तपसार्जितश्च।।८।।

एतान् गुणाढ्यान् अभिनन्द्यसत्त्वान्
सौम्याकृतीन् सौम्यगुणाभिगम्यान्।
बुधेन्द्रवृन्दारकवृन्दवन्द्यान्
पद्यप्रसूनैरहमर्चयामि।।९।।

तत्पादपद्मोपसेवी
सत्यव्रतः

जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

तिथेरत्रोल्लेखो नास्ति

शुभाशंसा

(अनुष्टुब्वृत्तम्)

राष्ट्रस्मृतिरिति ग्रन्थः श्रीनारायणशास्त्रिभिः।
बुधाग्रगैर्विरचितो लोकसङ्ग्रहकाम्यया।। १।।

राष्ट्रवेदः पुरा तेषां तातपादैर्विनिर्मितः।
राष्ट्रस्मृतिर्विरचिता तत्पुत्रैर्बोधदायिनी।। २।।

कविप्राग्रहरा एते धन्या मान्या महीतले।
'यद्विद्यावैभवं'[१] मातुं विद्यावन्तोऽपि न क्षमाः।। ३।।

नूत्ने श्रुतिस्मृती एते लोकसङ्ग्रहकाम्यया।
प्रणीते तातपुत्राभ्यां लोकेषु प्रचरिष्यतः।। ४।।

किं कार्यं किमकार्यं च सर्वमत्र विचारितम्।
कविप्राग्रहरैः साधु साधुमार्गश्च दर्शितः।। ५।।

तं मार्गमाश्रयँल्लोकः श्रेयः परमवाप्नुयात्।
इति नास्त्येव सन्देहलवोऽपि ननु कस्यचित्।। ६।।

लोकः सुखी भवेन्नित्यं सदाचारपरायणः।
इत्यर्थं तद्धितकृता गिरः प्रस्फुटिता इह।। ७।।

---

१. विद्यावैभवमिति तद्गृहनाम।

भ्रष्टाचारादिकं देशे यदत्र परिलक्ष्यते।
स्वभाषाया उपेक्षा च गुरूणां चावमानना।।८।।

स्त्रीपुंसयो[1]श्चरित्रस्य भ्रंशश्च भृशदुःखदः।
मिथः कलहवृत्तिश्च स्वानां[2] चैवावहेलना।।९।।

वैदेशिकान्धानुकृतिश्चेत्यादिर्विषयो महान्।
राष्ट्रस्मृतौ विमृष्टो ऽस्ति स्मृतिकारैः समासतः।।१०।।

एते दोषाः समाधेयाः कथं स्युरिति यद्वशात्।
स्वर्गापवर्गमूलो ऽस्मद्देश उन्नतिमाप्नुयात्।।११।।

कालप्रभावाद् ध्वसितो महिमास्य महीतले।
तस्य वर्धिष्णुतार्थं नः सर्वारम्भा अपेक्षिताः।।१२।।

इतीयमनुशिष्टिर्नो हितार्थं सम्प्रवर्तिता।
स्मृतिकारैर्मनो यत्रास्माभिर्देयं निरन्तरम्।।१३।।

यथा मिथोऽनुरागो नो ऽनुदिनं वृद्धिमाप्नुयात्।
तथा प्रवर्तितव्यं स्यादस्माभिः शुद्धबुद्धिभिः।।१४।।

सङ्गच्छमानाः[3] सततं संवदन्तश्च नित्यशः।
समानमानसाः सर्वे मराला इव मानसे।।१५।।

शुद्धचारित्र्यसंयुक्ताः शुद्धान्तःकरणास्तथा।
संवसेम स्वके राष्ट्रे राष्ट्रस्मृत्या प्रबोधिताः।।१६।।

इत्याशास्ते
सत्यव्रतशास्त्री

---

१. अचतुरविचतुरसुचतुरेत्यदि (५.४.७७) सूत्रेण स्त्रीपुंसशब्दस्य निपातनम्।
२. स्वमज्ञातिधनाख्यायाम् (१.१.३५) इत्यनेन ज्ञातिभिन्न एवार्थे सर्वनामत्वेऽत्र च ज्ञात्यर्थे सर्वनामत्वाभावे रूपम्। स्वानां बन्धूनाम् इत्यर्थः।
३. समो गम्यृच्छिभ्याम् (१.३.२९) इत्यनेनात्मनेपदम्।

## जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

तिथेरत्रोल्लेखो नास्ति

(मालिनीवृत्तम्)

जयपुरमभिगम्याप्याप्नवं श्रीमतां नो
सुकृतकृतिसुलभ्यं दर्शनं यत्नतोऽपि।
प्रबलतरमभून्मे मानसे ऽनिष्टकष्ट-
मनुचितमिदमित्थं नो मया कार्यमासीत्।। १।।

जगति विविधकृत्यैः कृष्यमाणा बलेन
मनसि वचसि काये पारवश्यं दधानाः।
नहि किमपि विधातुं स्वेच्छया शक्तिमन्तो
नियतिनियमबद्धा मद्विधाः बोधवन्तः।। २।।

नहि मनसि कदाचिच्छान्तिरस्त्येतदीये
न च निजगृहकृत्ये ते रमन्ते कदाचित्।
नहि च निजकुटुम्बं भर्तुमेते लभन्ते
समयमिति दशैषां शोचनीयैव सत्यम्।। ३।।

मम मनसि सदैव प्रादुरास्ते विचारो
बुधजनगणसङ्गः प्रापणीयो मयेति।
स खलु मम विचारो नैति कार्यत्वरूपं
नहि जगति समीहा पूर्यतेऽस्मद्विधानाम्।। ४।।

किमिदमिह जगत्यां जीवितं यत्र नैव
क्षणमपि नहि लभ्यः स क्षणो मानुषेण।

स्थिरमतिमाप्तेनामुना यत्र दीर्घं
किमपि किमपि दृश्यं दृष्टिसात्स्याद्विधातुम्।।५।।

अथ च पुलकमाप्तं तेन चित्तं स्वकीयं
प्रमदभरभरेण प्रेमसायुज्यभाजा।
वचनमति विचित्रं मे स्मृतिं याति सम्प्र-
त्यति निपुणकवेर्भोआ'ङ्गलदेशोद्भवस्य।।६।।

न खलु बहुल आस्ते कालखण्डो मयीति
विविधविषयचिन्ताचान्तचेता भवामि।
कथमिव मयका स्युः पूरणीया अपूर्णा
अनतिमहति काले ग्रन्थपूगा अनेके।।७।।

नहि मम सुत आस्ते संस्कृते ऽतिप्रवीणो
न च बहुरुचिरस्य प्राक्तने वाङ्मयेऽस्ति।
अभिनवविषयेष्वेवास्ति नैपुण्यमस्या-
भिरुचिरपि च विचित्रं नैव किञ्चिद्धि तत्र।।८।।

नवनवविषयेष्वेवास्ति लोकप्रवृत्तिः
सुरगिरि शिथिलैव प्रत्यहं लक्ष्यते सा।
कथमपि समुपार्ज्या वृत्तिरित्येतदेव
परमचरमलक्ष्यं लक्ष्यते वै जनानाम्।।९।।

(उपजातिवृत्तम्)

न केवलं भारतदेश एव
प्रवृत्तिरेषा परिलक्ष्यतेऽद्य।
अन्यत्र देशेष्वपि तादृगेव
संलक्ष्यते दुःखकरा प्रवृत्तिः।।१०।।

---

१. भोभगोअघोअपूर्वस्य योऽशि (८.३.१७) इत्यनेन रोर्यादेशे, ओतो गार्ग्यस्य (८.३.२०) इत्यनेन तल्लोपः।

अर्थप्रधानेऽद्य युगे जनानां
तत्र प्रवृत्तिः परिजायते चेत्।
न तत्र चित्रं किमपीति मन्ये
ह्यर्थार्थिता सर्वजनप्रसिद्धा।। ११।।

इत्येव वाचं समुदीर्य सत्सु
विद्वद्वरेण्येषु समासतोऽहम्।
प्रणामपर्यायनिवेदनेन
वाचं स्वकीयामुपसंहरामि।। १२।।

जयपुरवास्तव्यान् डा० नारायणशास्त्रिकाङ्करमहाभागान् प्रति प्रेषितं पत्रम्

तिथेरुल्लेखोऽत्र नास्ति

(भुजङ्गप्रयातवृत्तम्)

भवत्पत्रमासाद्य हृद्यं ममाभूत्
प्रहर्षप्रकर्षो गिरां यो न गम्यः।
ततस्तेन शीर्षेण नम्रो नतेन
प्रणामान् स्वकीयानहं प्रेषयामि।। १।।

यदेवानुभूतं जगत्यां भवद्भि-
स्तदेवातिदुःखाकरं हा! मयापि।
विपर्यास एवात्र संलक्ष्यते यो
मनःक्षोभमत्यन्तमेवातनोति।। २।।

न शान्तिर्जगत्यां न वा सौहृदय्यं
न वा ऽन्योन्यसाहाय्यभावातिरेकः।
न वाऽऽत्मीयभावेन लोकप्रवृत्ति-
र्न वा वञ्चनातो निवृत्तिः कदाचित्।। ३।।

निजं पण्डितम्मन्यमाना बहुत्र
स्वकीये मते बद्धनिष्ठाः परेषाम्।
मतानि प्रसह्याऽवमत्य प्रमाणे
स्वकीयं मतं स्थापयन्त्यप्रबुद्धाः।। ४।।

विवेको न कृत्येष्वकृत्येषु तेषाम्
अतो मानसं दूयते मे नितान्तम्।

मनुष्याकृतिं केवलं ते दधानाः
पशुत्वे न तेषां विवेकोऽन्यथाऽस्ति।।५।।

न चेदेवमेषां प्रवृत्तिर्न हिंसा-
परा संभवेल्लोकगर्ह्या कथञ्चित्।
विना हेतुतो नैव लोकौघमेते
नृशंसा निहन्युः समस्तेऽपि देशे।।६।।

वमादीनिमे स्थापयित्वा नृशंसा
जनान् हन्तुकामाः स्वकार्येषु सक्तान्।
स्वहिंस्रत्वमेवातिगर्ह्यं विवृण्व-
न्त्यथो वक्रतां स्वस्वभावप्ररूढाम्।।७।।

भयं बद्धमूलं भवेल्लोकचित्ते
भवेच्चापि कार्योपरोधस्तदीयः।
शठा एतदेवाभिवाञ्छन्ति नान्यत्
कुमार्गं सुमार्गं खलास्तर्कयन्तः।।९।।

(उपजातिवृत्तम्)

कुबुद्धिमेषां परिहृत्य शम्भु-
रेभ्यः शुभां यच्छतु बुद्धिमद्धा।
इत्येव सम्प्रार्थनमस्ति नोऽद्य
शिवः शिवं नो विदधातु नित्यम्।।९।।

निरागसां रक्तभरेण रक्ता
चिराय भूः सम्प्रति वष्टि[1]शान्तिम्।
आबालवृद्धं जनता चिराय
सन्त्रासमाप्तेच्छति शान्तिमेव।।१०।।

---

१. वश कान्तौ इत्यस्य प्रथमपुरुषैकवचने रूपम्। कान्तिरिच्छा। वष्टि इच्छतीत्यर्थः।

सत्यां हि शान्तौ सकलो जनः स्यात्
निःशङ्कभावेन रतः स्वकार्ये।
ततः समृद्धिं परमां गतः सन्
देशोऽस्मदीयः सुखमश्नुवीत।। ११।

उद्योगशालासु निरन्तरं स्यात्
कार्यप्रवृत्तिः शुभदा जनस्य।
वैज्ञानिकाश्चापि भयेन मुक्ताः
प्रयोगशालासु रता भवेयुः।। १२।।

अध्यापका वीतभयाः श्रमेण
विद्यार्थिनोऽध्यापयितुं प्रवृत्ताः।
शास्त्राणि सम्यक् परिशीलयन्तो
गवेषणाकार्यरता भवेयुः।। १३।।

(अनुष्टुब्वृत्तम्)

एतां सम्प्रार्थनामूरीकृत्य नो हृदयोत्थिताम्।
आशुतोषो वितनुयाच्छिवतातिः शिवः शिवम्।। १४।।

इति निवेदना
सत्यव्रतशास्त्रिणः

सुन्दरनगर कालोनी
जिला मण्डी
२६.९.१९७८

मध्ये दिल्ली-विश्व-विद्यालयं संस्कृत विभाग प्रधानानाम्, विद्वत्पितॄणां
द्राक्तर सत्यव्रतमहोदयानाम्

सेवायाम्

शार्दूलविक्रीडितेन

१. सत्य-स्वः। रस-सिद्ध-राध्य-कवयः श्रद्धेय-सेव्य-व्रताः।
नौम्याबद्धकरः, कृतज्ञमतयः येषाम्पुरस्तान् नताः।
इच्छत्येष प्रहातुमत्रभवताम् पार्श्वे स्वपद्य-कृतिम्
संक्षिप्तां, यदि भूष्यतामियमहो दत्त्वा निजां सम्मतिम्।।

२. लेख्यं, किम्प्रहिणोत्वयं स्वयमिमां प्रोत्साहनप्राप्तये
चेदोमेश प्रतीक्षितं क्षितिसुराः भाग्योदयं मंस्यते।
लुप्ताः संस्कृतमार्मिकाः, कतिपये वृद्धाश्च प्रार्थ्याः कथम्?
आधारं सबलं विधाय कमियम् गीर्वाण वाग् रंस्यते?।।

पूत-पाद-पांसु :
किशोरी लाल भारद्वाजः

अवधेयम्ः उत्तरायोत्कचिन्तोऽन्तर्देशीयपत्रं निक्षिपन् क्षम्यताम्

दिल्ली
३०.११.१९७९

श्रद्धेया गुरुवर्याः

स्वीक्रियन्तां प्रणतयः

मान्या दिल्लीं समायाता आगत्य च गताः पुनः।
मम नासीत्तथा भाग्यं गुरुदर्शनमाप्नुयाम्।। १।।

सकुटुम्बोऽटनार्थं हि राजस्थानं तदागमम्।
यातो जयपुरं पूर्वम् अथोदयपुरं ततः।। २।।

अक्तूबरस्य मासस्य दिवसे दशमे पुनः।
दिल्लीं प्रतिनिवृत्तेन पत्रं प्राप्तं प्रतीक्षितम्।। ३।।

त्वरितं दूरभाषेण भवद्वृत्तं च पृष्टवान्।
नैराश्याप्लावितोऽभूवं श्रीमद्दर्शनवञ्चितः।। ४।।

सूचितोऽहं तदा सम्यक् पूज्यया भ्रातृजायया।
सर्वां समाप्य यात्रां तु पश्चिमस्यां यशस्विनीम्।। ५।।

नवम्बरान्ते श्रीमन्तः बैंकाकनगरीं पुनः।
नियोगायागमिष्यन्ति कार्यं हि महतां धनम्।। ६।।

इह वृत्तं श्रुतं मन्ये ऽध्यक्षाणां गुरुभिर्महत्।
संस्थानाध्यक्षतार्थं यत् तेऽभिषिक्ता महोदयाः।। ७।।

प्रस्थास्यन्ते कदा किन्तु परित्यज्येह शासनम्।
नैतच्छक्यं मया वक्तुं श्रीराणा वेत्ति वा न वा।। ८।।

सर्वे मामनुपृच्छन्ति भवदागमनं प्रति।
गते द्व्यब्दात्मके काल इत्येवं सूच्यते मया।। ९।।

हृदये पुनरिच्छामि भवदागमनं शुभम्।
क्षिप्रमेव कथञ्चित् स्यान् मानवहं मुदं ददत्।। १०।।

पाश्चात्यभूमिदेशेषु यात्रावृत्तं यशस्करम्।
निवेदयन्तु श्रीमन्तः क्रमेण कृपया च मे।। ११।।

किं किमुद्भासितं स्थानं प्रज्ञायाः प्रभया प्रभो!
के चासन् विषयास्तत्र श्रोतुमिच्छामि तत्त्वतः।। १२।।

कुशलं चापि मान्यानां कीर्तिं चापि सुखावहाम्।
काव्यप्रवृत्तिमेवापि श्रोतुमुत्कं मनो मम।। १३।।

प्रतीक्षिष्ये भवत्पत्रं हृदयाह्लादकारकम्।
दर्शनोत्कस्य यत् किंचिद् दर्शनाभावपूरकम्।। १४।।

इति भवतां शिष्यत्वसुखमनुभवतः
कृष्णलालस्य

नलेटी,
( जिला कांगड़ा )
१०.१.१९९२

प्रिय डा० सत्यव्रतशास्त्रिणः

नमो नमः।

आगतो नववर्षोऽयं क्रमेण प्रचलन् भुवि।
तनोतु मङ्गलं गेहे भवतां पुण्यशालिनाम्।।

बृहत्सप्तपदीपञ्च प्रतयः प्रेषिता मया।
आप्ता एव भविष्यन्ति भ्रातृभिर्मे हितेच्छुकैः।।

प्रयोगं कर्तुमर्हन्ति भवन्तो यत्र कुत्रचित्।
वस्त्विदं भवतामेव साफल्यं भवदाश्रितम्।।

अद्भुतोऽस्ति मयि स्नेहो भवतां सुहृदां सताम्।
मानसं मे विजानाति लेखनी वर्णयेत्कथम्।।

पत्रेण स्नेहपूर्णेन साहसं मम वर्धते।
स्नेहपूर्णो यथा दीपः प्रकाशं लभते वरम्।।

भवदीयो
दुर्गादत्त शास्त्री

पञ्जीकृतपत्रम्
२४.४.१९९२

प्रियवरभ्रातरः डॉ० सत्यव्रत शास्त्रिणः

नमो नमः

श्रीरामकाव्यं रचितं भवद्भिर्विज्ञाय चेतः परमं प्रसादम्।
ममाध्यगच्छत्तुलनाविहीनं द्रष्टुञ्च नेत्रे विकले मदीये।।१।।

सम्प्रेषणीयं द्रुतमेव मह्यं विलोक्य सन्तुष्टिमहं लभेय।
अधीत्य सर्वं मम बोधवृद्धिर्दिनं दिनं स्याद् भवतां प्रतापात्।।२।।

स्वर्गस्थिता मे गुरवो हि धन्या यदात्मजः कीर्तिमिमामवाप।
शस्याः सुतास्ते यशसोऽभिवृद्धिं कुर्वन्ति सत्यं निजपूर्वजानाम्।।३।।

द्रव्यं मया स्वल्पमिदं भवद्भ्यः श्रीरामकाव्यस्य कृते कृतन्तु।
स्वीकार्यमेतद् विनिवेदयामि न रत्नमूल्यं तरितुं क्षमोऽहम्।।४।।

अकिञ्चनोऽहं सुधियां समाजे तथापि ते स्नेहपरा भवन्ति।
आनृण्यमेषां सुलभं कथं स्याज्जानामि नेदं शतशो विचिन्त्य।।५।।

भवदीयो
दुर्गादत्तः शास्त्री

नलेटी
( जिला कांगड़ा )
११.५.१९९२

प्रियवर्याः मान्यभ्रातरः

नमो नमः

सुभ्रातृवित्तं न विभाज्यमत्र
सङ्कोच एवं नहि धारणीयः।
एकोऽपरस्यास्ति सदाधिकारी
गृह्णातु तस्मान्मम तुच्छमेतत्।। १ ।।

न मूल्यरूपेण निबोधनीयं
परं विजानन्त्वुपहारमेव।
श्रद्धा गुरूणां मम मानसे या
तदादरार्थं ग्रहणीयमेतत्।। २ ।।

विद्वद्वरेण्या भुवने भवन्तो
मम प्रसादं त्वहमेव बोधे।
श्रीरामकाव्यं त्वरया युतं स्याद्
यदा भवन्तः समयं लभेरन्।। ३ ।।

साभारम्
भवदीयो
दुर्गादत्तः शास्त्री

पटना सिटी

१८९३ नववर्षम्

कालः कल्पान्तकारी कलयति जगती-जीवनस्यायुरेतद्
वर्षं तस्यैकखण्डं भवति सुविदितं कर्मभिस्स्वेन युक्तैः।
दुर्बुद्धेरुग्रकर्म-प्रशमनकरणे सौमनस्य-प्रसारे
आतङ्कात् त्राणदाने कवचहरमिदं नूतनं वत्सरं स्यात्।।

भवदीयः
चन्द्रदीपशुक्लः

१.१.१९९३
नलेटी
(जिला कांगड़ा)

विद्वद्वरेण्याः डा० सत्यव्रतशास्त्रिणः
सस्नेहं नमस्कृतयः।

वर्षो नवीनः समुपस्थितोऽयं
मासैः समस्तैः समलङ्कृतः सन्।
क्षणं क्षणं मोदयुतो भवद्भ्य
आस्तां ममैताः शुभकामनाश्च।।

मङ्गलाकाङ्क्षी
दुर्गादत्तः शास्त्री

दिल्ली
४.३.१९९३

ओ३म्

परमश्रद्धेया गुरुवर्याः

सप्रश्रयं मे प्रणामाञ्जलिः

इतः प्रस्थानवेलायामुक्तं पूज्यैर्यदावयोः।
पूर्ववत् पत्रसम्बन्धः प्रवासे स्थास्यंति ध्रुवम्।। १।।

इत्यनुस्मृत्य पत्रं च प्रतीक्षमाण एव तु।
व्यचिन्तयं भवन्तः स्युर्न रुष्टा मे मनागपि।। २।।

अथवा कर्मणि व्याप्ताः कस्मिंश्चिन्महति व्रते।
लब्धस्ततो न कालः स्याद् वाचं स्निग्धां न लब्धवान्।। ३।।

ह्यः प्रत्यागत्य रात्रौ च पत्रं प्रसन्नचेतसाम्।
दृष्ट्वासं हृदये तुष्टो नापराद्धं मया गुरौ।।४।।

अस्मन्मानसिकस्तन्तुर्बध्नात्यावां हि निश्चितम्।
स्मरणसमकालं हि पत्रं लब्धं यथा गुरोः।।५।।

परोह्य एव पृष्टासीत् प्रकृतिः श्रीमतां गृहात्।
ह्य एव च वचो लब्ध्वा भावत्कं सुखमाप्तवान्।। ६।।

मानसिकमिमं बन्धं दृष्ट्वोक्तं भवभूतिना।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति।।७।।

प्रथमे दिवसे मार्चे ज्ञानपीठाय ढौकितः।
रामकीर्तिमहाकाव्यप्रस्तावो मनसा मुदा।।८।।

बिड़लाख्यप्रतिष्ठाने प्रस्तावोऽपर एव तु।
तस्यैव हृद्यकाव्यस्य प्रहितः शुभयाशया।।९।।

परं निर्णायकास्तत्र गुणज्ञा नेत्यरुन्तुदम्।
मत्सरग्रस्तभावास्तेऽतिसङ्कुचितमानसाः।।१०।।

चन्द्रशेखरमाजादमाधारीकृत्य रूपके।
सेमवालैः पुरस्कारा घोषिताः पूर्वमेव तु।।११।।

इति स्मृतं भवद्भिः स्यात् तत्र मयापि रूपकम्।
निवेशितमिति ज्ञातं मन्येऽहं भवतां ध्रुवम्।।१२।।

पुरस्काराय तस्मै मे नाम स्यात् प्रस्तुतं प्रभो।
आशिषः सप्रयासाः स्युर्भवतामिति कामये।।१३।।

सर्वथा सर्वदोन्नीतो भवद्भिरेव खल्वहम्।
ऋते भवद्भ्य एवात्र प्रार्थये कं पुनर्जनम्।।१४।।

विश्वविद्यालयोऽत्रत्यः सनाथीक्रियते कदा।
कृपया सूचनीयोऽयं जनः शिष्यस्तु धीमताम्।।१५।।

प्रणामान् भ्रातृजायायै विनतोऽहं समर्पये।
कामये सर्वथा स्वास्थ्यमुभयोरेव सर्वदा।।१६।।

विनयावनतः शिष्यः
कृष्णलालः

खेकड़ा
(जिला मेरठ)
२०.४.१९९३

सम्मान्या महाकवयः।
जयतु भारती सदा।
रामकिशोरमिश्रो वो
नमस्करोति सादरम्।। १ ।।

आङ्गल्योपनिबद्धे ते
प्राप्ते चरित्रपत्रके।
एते द्वे अपि पर्याप्ते
हिन्द्या आवश्यके न ते।। २ ।।

प्रेषयामि भवद्भ्यो हि
छन्दस्कलावर्तीं कृतिम्।
सानन्दाः सपरिवाराः
श्रीमन्तः स्युरितीष्यते।। ३ ।।

भावत्कः
रामकिशोरमिश्रः

दिल्ली
२.६.१९९३

श्रीः

श्रीमत्सु गुरुवर्येषु प्रणामाञ्जलयः शुभाः।
शिवनारायणेत्यस्य शिष्यस्यार्येषु सन्ति मे।।१।।

यथाऽऽदेशमवालोकि पत्रकाव्यं मया शुभम्।
भवदीयं तथा तत्र यथामति च संस्कृतम्।।२।।

नाहमुक्तोऽस्य कार्यस्य गुरोर्गेहस्य मार्जना।
भवत्येव तु पुण्याय मत्वेति तत् कृतं मया।।३।।

अस्ति वक्तव्यमत्रेदं यद्युचितं प्रतीयते।
ग्रहीतव्यं यथाक्रमं न मेऽत्र क्श्चनाग्रहः।।४।।

१. सम्बोधनान्ते स्वस्त्यादि तत्पङ्क्तावेव दीयताम्।
२. छन्दोनिर्देशना मध्ये क्रियताम्, आदितो नहि।।५।।

कानिचिदिह पद्यानि संस्तुतिं व्यञ्जयन्ति हि।
स्वार्थपूर्त्यभिलाषं वा महतोऽल्पस्य वा जनात्।।६।।

तानि काव्यादपास्यानि न वर्धयन्ति गौरवम्।
रूप (Format) दृष्ट्याऽपि किंचिद् वै काव्ये ह्यस्मिन् मयेष्यते।।७।।

पङ्क्त्यन्तः समानः स्याद् दण्डकानां निवेशनम्।
क्रियते यदि साम्येन काव्यं स्यादक्षिहारि तत्।। ८।।

अहमेतत् समीक्षिष्ये हीरालालोऽत्र दिश्यताम्।
मामुपैतु स एतेन काव्यं रम्यं प्रभास्यति।।९।।

भूयान् भागोऽत्र पृष्ठस्य रिक्तो यदि तु वर्तते।
पत्रान्तरसमारम्भः कृतस्तत्र तु शोभनः।। १०।।

विषयानुक्रमो देय आदौ ग्रन्थस्य विस्तरात्।
अत्र पत्रगता भावाः सूच्या ग्रन्थक्रमेण हि।। ११।।

स्थानादिवर्णनां कुर्वन् रामकथागतं च वा।
ग्रन्थस्तत्र विशेषण सूचनीयो ह्यनुक्रमे।। १२।।

भूमिका चापि पद्यैर्हि पद्यकाव्येऽत्र शोभना।
अनुक्रमण्यस्तथा काश्चिद् देया अध्येतृहेतवे।। १३।।

पद्यानुक्रमणी देया (ख) नामानुक्रमणी तथा।
स्थानानां च जनानां च शोधायैषोपयोगिनी।। १४।।

छन्दसां सूचिका चापि ग्रन्थान्ते सूच्यतामिह।
क्षम्यतामेष वः शिष्यः कुर्वंश्चापलमत्र वै।। १५।।

गुरुषु विनयी नित्यं गुणलेशेन वर्जितः।
स्वस्थः श्रीमच्छुभाशंसाबलेन भूयसा युतः।। १६।।

स्वाधीनसर्वसिद्धीनामाशासानः शिवं शिवाम्।
क्रीडन्तीं मानसे नित्यं विनीतस्य शिवस्य मे।। १७।।

सपदि भवतु भवतां, मानसे सत्प्रकाशः
कृतिकवितमकविता, भासतां तत्र नूत्ना।
सुरगिरि निहितमतिः शिष्यलोकः प्रियोऽस्तु
निजपरजनगणना-दृष्टिरस्येत चित्तात्।। १८।।

मम च भवतु हृदये नित्यमेव प्रकाशः
सुतनुचरणयुगलीभावना मानसेऽस्तु।
बलमिदमथ मनसा नित्यमेवाश्रयंश्च
परमपुरुषवनिताभावनां नो क्रियासम्।। १९।।

सरसि सरसिजयुते हंसवाहे स्थिता सा
कुसुमसदृशसुतनुर्गौरवर्णा शुभाङ्गी
मम हृदयसरसिजे नृत्यतान्नित्यमेव
मम मतिरति विमला भूयसा तेन भूयात्।। २०।।

अलं वाचां प्रसारेण गुरूणां पुरतः शिवः।
अनुक्तमूहमानानां मौनमेष समाश्रये।। २१।।

इति बुधजनचरणकमलचञ्चरीकस्य
शिवनारायणस्य प्रणामाञ्जलयः।

शिमला
२२.९.१९९३

स्वस्ति।

मिश्रोऽभिराजराजेन्द्रः श्यामलापादपीठतः।
सादरं प्रणमत्येष गुरुवर्यं बुधोत्तमम्।।१।।

विद्याविनयसम्पन्नं मानोन्नतमुदञ्चितम्।
सारस्वतसमुन्मेषोद्भवत्कीर्तिविकस्वरम्।।२।।

पराऽभ्युदयसंसक्तं घनाम्बुवर्षणव्रतम्।
काव्यनाट्यप्रणेतारं शास्त्रचिन्तनतत्परम्।।३।।

सत्यव्रतं लसत्संज्ञं मयि वात्सल्यमेदुरम्।
नौम्यहं परया भक्त्या स्वीयाऽभ्युदयसम्बलम्।।४।।

मासस्यास्य चतुर्थेऽह्नि पूर्वाह्ने शनिवासरे।
विश्वविद्यालये दिल्ल्यां साक्षात्कारोऽनुयोजितः।।५।।

तत्राहं गतवानस्मि प्रोफेसरपदाशया।
सम्यक् परीक्ष्य सस्नेहं श्रूयते नु खलीकृतः।।६।।

आसीन्नैकोऽप्यविदितो विशेषज्ञ इहागतः।
न चाहं नूतनस्तेषां सर्वमासीद्यथायथम्।।७।।

प्रश्नाः सर्वे समाधेयाः व्याख्याताश्च सविस्तरम्।
ययैव भाषया पृष्टास्तयैवोत्तरिताः पुनः।।८।।

बिन्दुस्सिन्धुत्वमानीतस्सत्वरं गतविक्लवम्।
प्रश्नं समुचितं प्रष्टुं सर्वे पर्यायतः स्थिताः।।९।।

तथापि सम्मतो नाहमुपाध्यायस्य धीमतः।
कारणं तत्र जानीयादीश्वरः स च केवलम्।।१०।।

गुणैकपक्षपाती नो कस्माल्लोको हि निष्ठुरः।
सारस्वतश्रमे कस्मान्न स्पृहाऽस्ति मनस्विनाम्।।११।।

किम्मयाऽपकृतं तेषां किन्नाधीतं यथेच्छितम्।
काव्यशास्त्रविनोदाभ्यां को निमेषो न यापितः।।१२।।

न द्वेषो न च मात्सर्यं प्रतिस्पर्धा न वञ्चना।
सार्धं केनापि मे क्वापि सर्वे जानन्ति भारते।।१३।।

तथापि न क्रिये हन्त नाभिनन्द्ये सुहृद्वरैः।
यैर्नु बद्धा दृढा मैत्री त एवाहितकांक्षिणः।।१४।।

राष्ट्रियसंस्कृतस्थाने किञ्चित्पूर्वं बभूव यत्।
तदेव साम्प्रतं विश्वविद्यालयमहाजिरे।।१५।।

षड्विंशतिः सुवर्षाणि पाठितं संस्कृतम्मया।
अष्टाविंशतिसंख्याकाः शोधोपाधिसमञ्चिताः।।१६।।

ग्रंथाश्च शोधपत्राणि पुरस्कारादयोऽपि मे।
विलक्षणं नु तत्सर्वं नास्म्यहं मुखदुर्बलः।।१७।।

निदेशकपदे नाहं तथापि विनियोजितः।
प्रस्तावितोऽपि सस्नेहं जयमन्तेन धीमता।।१८।।

यो नियुक्तस्तदर्हत्वं ध्रुवं जानन्ति पण्डिताः।
छात्रा द्वादशकक्षास्थाश्चापि येन न पाठिताः।।१९।।

तत्कृते शशशृङ्गाभं शोधनिर्देशनादिकम्।
विहारराज्यजन्मैव जाता तस्याद्य योग्यता।।२०।।

मत्वा देवं गुरुं पूज्यं सप्तकं लिखितं मया।
यत्प्रतिष्ठाप्रवृद्ध्यर्थं ग्रंथे तदभिनन्दने।।२१।।

कृतघ्नौ हन्त तावेव क्षेत्रपुरुषसन्निभौ।
जातौ ममापमन्तारौ देववाणीविनाशकौ।। २२।।

किमहं निष्ठुरं वच्मि स्वार्थध्वंसजडीकृतः।
श्रुत्वा विद्याव्रता नूनं प्रमाणं गुरवस्स्वयम्।। २३।।

पुरा परीक्षितश्चाहं भवद्भिरपि सत्वरम्।
आत्मव्यतिकरं तस्माद् भवते विनिवेदये।। २४।।

ये च वृद्धा महाचार्याः सर्ववन्द्या बुधोत्तमाः।
नीरक्षीरविवेके हा हंसायन्ते न ते कथम्।। २५।।

स्वदुर्योधनरक्षायै धृतराष्ट्रा भवन्ति ते।
किञ्च, विद्याकुलोच्छेदकारका नष्टलोचनाः।। २६।।

भवदुत्संगतल्पेऽहं वत्सीकृत्योऽस्मि लालितः।
तस्मादार्य! यथा सोढं दैन्यं, तद्धि निवेदये।। २७।।

क्व नु कल्पद्रुमः श्रीमान् वाञ्छापूरणतत्परः।
गुणार्हताविशेषज्ञः क्व बब्बूलनिभा इमे।। २८।।

तथापि न हताशोऽहं न मन्दो न च विघ्नितः।
विधियोगमिमं मत्वा प्रतीक्षे म्हितोदयम्।। २९।।

नमस्यां प्रणतिं स्वीयां भवत्पादाब्जयुग्मके।
समर्प्य सादरं सोऽयं विश्राम्यति वशंवदः।। ३०।।

भवच्चरणेन्दीवरचञ्चरीको
मिश्रोऽभिराजराजेन्द्रः

नलेटी
( जिला कांगड़ा )
२५.१२.१९९३

प्रिय डा० सत्यव्रतशास्त्रिणः
सस्नेहं नमस्कृतयः।

भावी वर्षो जयतु सुखदोऽलङ्कृतो भानुमासैः
श्रुत्वा वाचं मधुरसभरां मानसं मोदमेतु।
लक्ष्मीर्नित्यं वसतु सदने शुभ्रयत्नैरवाप्ता
सर्वत्रैवं भवतु भवतां प्रत्यहं मानवृद्धिः।।

मङ्गलाकाङ्क्षी
दुर्गादत्तः शास्त्री

पटना सिटी
२५.१२.१९९३

खृष्टाव्दं १८८४ नववर्षम्

कालः कल्पान्तकारी कलयति जगती-जीवनस्यायुरेतत्।
वर्षं तस्यैकखण्डं भवति सुविदितं कर्मभिस्स्वेन युक्तैः।।
दुर्बुद्धेरुग्रकर्म-प्रशमनकरणे-सौमनस्य-प्रसारे ।
आतङ्कात् त्राणदाने कवचहरमिदं नूतनं वत्सरं स्यात्।।

भवदीयः
चन्द्रदीपशुक्लः

दिल्ली
१४.१.१९९४

समदरणीयेषु शास्त्रिवर्येषु

सादरं विलसन्तु प्रणतिततयः।

राष्ट्रियवार्तासंवादप्रचारमाध्यमेनैतद् विज्ञाय भृशं प्रसीदति मे मनः यत् कनाडासंस्थितम् अन्तरराष्ट्रियं भारतीयोच्चाध्ययनसंस्थानं कालिदासपुरस्कारेण भवन्तं पुरस्कृत्यात्मानं गौरवाभीष्टं मनुते।

वस्तुतः सरस्वतीसमाराधनतत्पराणां सामयिकसक्रियलेखकदक्षाणाम् इदमित्थन्तया च ज्ञाननवनीतं निर्देष्टुं समर्थानां भवादृशां स्वरूपानुरूपमेवायं सम्मानपुरस्कारः।

कामये, प्रभुकृपया भवान् मौलिकसंस्कृतलेखनेन संस्कृतवाङ्मयं

समृद्धं कुर्यादिति–

विद्याव्रताय विज्ञाय विद्याविन्मौक्तिकाय च।
चारुगोत्राय विद्यानां श्रीसत्यव्रतशास्त्रिणे।।
कालिदासपुरस्कार उपस्कारो महौजसे।
कनाडाराष्ट्रियैः शिष्टैः प्रस्तुतो महते मुदा।।
कनाडासंस्थितं भव्यं संस्थानं सार्वभौमिकम्।
भारतमूलविद्यानां सम्मानयति सादरम्।।
चारुदेवात्मजं विज्ञं श्रीसत्यव्रतशास्त्रिणम्।
पितुः ह्यनुव्रतं पुत्रं सम्प्रादुस्ते पुराविदः।।

नवीनपाणिनेः पुत्रः कालिदासो नवोऽधुना।
रामकीर्तिमहाकाव्यं कुरुतेऽसौ नवं रघुम्।।
वर्द्धन्तां भुवि दीव्यन्तां श्रीसत्यव्रतशास्त्रिणः।
नरदेवः शुभाशंसी सर्वदा श्रुतिसम्बलः।।

नरदेव शास्त्री

खेकड़ा
जिलामेरठ
२५.१.१९९४

हे महाकवयो मान्याः।
जयतु भारती सदा।
प्रेषिता भवतां पार्श्वे
मयैकाङ्कचमत्कृतिः।

दिनाङ्के द्वादशे तद्धि
पुस्तकं प्रेषितं मया।
प्राप्तं न वा भवद्भिस्तत्,
कृपापत्रेण सूच्यताम्।

रामकीर्तिमहाकाव्य-
रचयितॄन्महाकवीन्,
सादरं वन्दमानोऽयं
पत्रोत्तरं प्रतीक्षते।

राम किशोरमिश्रः

कलकत्ता
१८.३.१९९४

श्रीयुतसत्यव्रतशास्त्रिमहाभागानां सविधे विनम्रमावेदनम्

श्रीपादपद्मयुगलं भवतां हि सिद्धिदं
चित्तान्धकारहरणोचितभानुमन्तम्।
नक्तन्दिवं विवुधवृन्दविवन्द्यमानं
श्रद्धान्वितेन मनसा प्रथमं नमामि।।

भवतां पत्रं समासादितम्।

प्राप्यार्थविषये तूर्णमनुसन्धास्यते तव।
यथा स्यात् त्वरिता प्राप्तिस्तथा चेष्टिष्यते मया।।
चित्तौदार्य्यं मया ज्ञातं भवतां संस्कृतात्मनाम्।
अतः संप्रार्थ्यते किञ्चित् समयोचितवस्तु भोः।

यस्यावनीयं शतसंख्ययान्विता
तस्याः समृद्धिर्न मया विवर्धिता।
भवेत् तथा प्राज्यपयोऽभिवर्षणं
विधीयतामङ्ग पयोदवर्षुक।।

इति
श्रीसीतानाथशास्त्रिणः

नलेटी
( जिला कांगड़ा )
६.७.१९९४

प्रिया: भ्रातर: डॉ० सत्यव्रत शास्त्रिण:,

नमस्कृतय:

तनयो मे 'शशी शर्मा' मिलितुमागमिष्यति।
विश्वविद्यालये दिल्ल्या: प्रवेशेच्छु: सुतस्य स:।।

साहाय्यं तस्य कर्तव्यमेतस्मिन् शुभकर्मणि।
भ्रातरो यत्र मे सन्ति कार्यसिद्धि: सुनिश्चिता।।

दूरभाषस्य संख्येयमधस्ताल्लिख्यते मया।
तद्गेहस्य महाभागा: कष्टमेतत्प्रदीयते।।

भवदीयो
दुर्गादत्त शास्त्री

मुम्बापुरी ( मुम्बई )
१६.८.१९९४

डॉ० सत्यव्रतशास्त्रिभ्यो नमो नमः

प्रेषयित्वाऽमुना सार्धं 'पत्रकाव्य' परीक्षणम्।
समाहितोऽस्मि परमं भवदिच्छा प्रमाणिता।।१।।

प्राप्तमासीद् भवत्पत्रं तत्पूर्वं ज्ञातमेव यत्।
देहलीं हि भवान् यातो नागतो नगरीमिमाम्।।२।।

आनायितं 'पत्रकाव्यं' कवीश्वरसहायतः।
प्रकृतेरस्वास्थ्यभराद् विलम्बः प्रेषणान्वितः।।३।।

प्रेषिते हस्तलिखिते द्वे इदानीं यथा भवान्।
मुद्रणार्थे प्रेष्य चैकं रक्षेदेकं स्वसंनिधौ।।४।।

कार्यबाहुल्यमपि मां रुणद्धि भृशमीदृशम्।
तथापि यदि रोचेत भवते कृतलेखनम्।।५।।

तत्सर्वमेव संपन्नं शुभान्तमिति धारये।
पुनः प्रणम्य सुहृदं विरमामि वचोभरात्।।६।।

स्नेहाङ्कितः
श्रीरामः
( एस्० बी० वेलणकरः )

(मुम्बई)
१२.९.१९९४

।। श्रीः ।।

सुहृदे नमो नमः।

भवता लिखितं पत्रं पठितुं सुकरं न मे।
तथापि ज्ञानमेवास्ति न संतुष्टो विमर्शनाम्।।

अस्वास्थ्यवृद्धे प्रकृतेः कार्यबाहुल्यतोऽपि च।
न पुनस्तदयं दीर्घं विधातुं हि क्षमो जनः।।

क्षम्यतां मे नु दौर्बल्यं त्यज्यतां मम लेखनम्।
अन्यः क्षमतरः कोऽपि भवदाज्ञां प्रपालयेत्।।

क्षमायाचकः
श्रीरामः

पुरी
१३.९.१९९४

पूज्याः श्रीशास्त्रिपादा विबुधजनमनोहारिहारायमाना,
निर्विघ्नं सर्वशास्त्राम्बुधितटगमने पश्चिमाश्चारुपुत्राः।
देशे देशे च दक्षा निरलसमनसा देववाणी-प्रचारे,
प्रोद्यन्नक्षत्रतुल्याः सुरभितचरिताः काव्यवारांगनेशाः।। १।।

पवित्रिते पादसरोजयुग्मके
नमोऽस्तु ते सूर्यमणेरपांशुलम्।
गुरौ सदाज्ञानतमोविनाशने
किमस्ति वा देयमतः समुन्नतम्।। २।।

व्यलेखि तावद् भवता मनोरमं, यदत्र पत्राभिधकाव्यमार्जवम्।
रसेन चालंकरणेन भूषितं सुयोगतस्तन्मम दृष्टिमागतम्।।३।।

तस्यावलोकनमहं स्वधिया विधाय
यच्चिन्तितं तदिह लेखगतौ निवेश्य।
संप्रेषयामि भवदन्तिकमद्य तावत्
तीर्थाज्-जनाभिलषिताद् पुरुषोत्तमाख्यात्।।४।।

कुत्रापि वैमत्यमथास्ति ते चेत्
हे पूजनीय! प्रतिभाविलासिन्।
सारस्वते कर्मणि लिप्तचित्त!
पत्रेण तत् सूचयितव्यमेव।।५।।

इति भवतामाशिषःकामुकः सूर्यमणिरथः

पुरी
१०.११.१९९४

परमपूजनीयाः शास्त्रिपादाः

नमामि हे ज्ञाननिधे! पदाब्जे तवामले पूततमे निकामम्।
आश्रित्य निर्भीकतया विभान्ति परःसहस्रं विबुधाश्च यत्र।। १।।

अवाप्य हे पूज्य! भवत्कराङ्कितं
रसान्वितं लेखमहं चिरात् पराम्।
प्रमोद-कोटिं सहसैव लब्धवा-
नभीष्ट-लाभे सुखितो भवेन्न कः।। २।।

'दल'शब्दः [1]पत्रार्थकोऽभियुक्तैर्बहु युज्यते।
इत्याश्रयो भवतां यस्तत्र मे संशयो महान्।। ३।।

हैमामह-धरण्यादि-कोषेषु वृक्षपत्रार्थे।
'दल' शब्दः प्रयुक्तोऽस्ति न तु लेखेऽर्थे दृश्यते।। ४।।

तथाप्यत्र भवादृशा विद्वांसो यत् प्रभाषन्ते।
स्वीकार्यं तदेवास्माभिर्विबुधान् को न मानयेत्।। ५।।

नालोचितं राजति तत्र पूज्या! भागान्तरं यत् भवदीयकाव्ये।
विभिन्नकार्ये व्ययितक्षणोऽहं क्रमानुसारं परिशीलयामि।। ६।।

इति विनीतः
सूर्यमणिरथः

---

१. लेखोऽर्थः (for letter)

कालिकाता ( कलकत्ता )
शुभविजयातिथिः २४०२

विश्वविश्रुतकीर्तिभाजां
परमाराध्यचरणानां

श्रीयुतसत्यव्रतशास्त्रिमहाभागानां
पादपद्मेषु विजयाप्रणतिः

श्रीशारदीयविजया तिथिरद्य धन्या
सर्वैः सुमान्यविवुधैर्जननीव मान्या।
दुर्गाप्रसादसफलीकृतजन्मलग्ना
वर्षान्तरे पुनरहो सुसमागतेयम्।।

अद्येदं भुवनं विभात्यभिनवं दिव्यप्रभोद्भासितं
वस्त्रान्नादिगता गतेव नियता या भावना पार्थिवी।
सर्वे जीवगणा हसन्ति सहसा लीनो विभेदोऽधुना
दूरादेत्य मिथो मिलन्ति मनुजाः प्रेमद्रवन्मानसाः।।

अस्मिन् पुण्यतमे क्षणे क्षणमये नित्यप्रमोदावहे
श्रद्धाचन्दनचर्चितः सुरभितो भक्त्या च चित्तोत्थया।
आचार्य्याः सुरभारतीप्रणयिनो ज्ञानप्रदीप्ता भवत्-
पादाब्जेष्वभिवादनाञ्जलिरयं संगृह्यतां मामकः।।

प्रणामनम्रः
श्रीसीतानाथदेवशर्मा

नलेटी
( जिला कांगड़ा )
१.११.१९९४

प्रियवर्या गुरुभ्रातरो डा० सत्यव्रतशास्त्रिणः

नमस्कृतयः।

स्मरामि गुरुवर्यान्मे श्रीचारुदेवशास्त्रिणः।
केवलं कृपया तेषां वाग्देवी समुपासिता।। १।।

"संस्कृतकाव्यकुञ्जन्तु" भवद्भ्यः प्रेष्यते मया।
अवलोक्य लिखन्तु मां भवतां मतमुत्तमम्।। २।।

सञ्जातः साम्प्रतं वृद्धोऽशीतिवर्षीयसम्मितः।
न जानामि कदा लोकात् प्रयाणं सम्भविष्यति।। ३।।

फलिता विदुषां सर्वा जीवने शुभकामनाः।
तत्रापि भवतां नाम सर्वोपरि विराजते।। ४।।

उत्तरस्य प्रतीक्षायां स्थास्यामि सदनेऽनिशम्।
आयास्यति ध्रुवं पत्रं भवतां मङ्गलप्रदम्।। ५।।

सस्नेहम् भवदीयो
दुर्गादत्तः शास्त्री

नलेटी
( जिला कांगड़ा )
५.८.१९९६

प्रियभ्रातरो डा० सत्यव्रतशास्त्रिणः
सस्नेहं प्रणामः

चिरान्न लिखितं पत्रं भवद्भिस्तु मनस्विनः।
कश्चिन्न ज्ञायते हेतुश्चिन्तात्र बाधतेऽनिशम्।। १।।

आशासे कुशलं तत्र राजते भवतां गृहे।
श्रीमतामाश्रमः पुण्यो देववाण्या निषेवितः।। २।।

स्मरामि गुरुवर्यान् मे प्रातः सायं दिनं दिनम्।
आशिषः केवलं तेषां लेखनीं प्रेरयन्ति मे।। ३।।

संस्कृताकादमी दिल्ल्यां देवभाषाप्रचारिणी।
संस्कृतदिवसस्येयं करोत्यायोजनं सदा।।४।।

अपरप्रान्तविद्वांस आमन्त्र्यन्ते श्रुतं मया।
भवति चेदिदं सत्यं संयोगं साधयन्तु मे।।५।।

एतेनैव मिषेणैवं साक्षात्कारो भविष्यति।
मूर्धन्यविदुषां तत्र दिल्लीपुर्या निवासिनाम्।। ६।।

उत्तरन्तु प्रतीक्षिष्ये युष्माकमुत्सुको गृहे।
ज्ञायते भवतां पत्रं "निधिः कश्चित्समागतः"।। ७।।

कवित्वं वा न पाण्डित्यं धारयामि ममात्मनि।
विदुषां सेवको नूनं भवामि विनयान्वितः।। ८।।

कविसम्मेलने भागमादातुं कामये त्वहम्।
किञ्चित् किञ्चिद् वदिष्यामि विदुषां तोषहेतवे।। ९।।

भवदीयः
दुर्गादत्तः

नलेटी
( जिला कांगड़ा )
८.९.१९९७

प्रिय डा० सत्यव्रतशस्त्रिणः

नमस्कृतयः।

दीपावल्याः परमसुखदो वासरः स्याद् भवद्भ्यो
लक्ष्मीरायाद् दिनमनुदिनं मङ्गलार्थं व्ययः स्यात्।।

एतज्ज्योतिर्ज्वलतु भवतामाश्रमेऽनन्तकालं
गेहे स्नेहो जलधिजलवद् वर्धतां नित्यमेव।।

परिवारस्य सर्वस्य भवतु मङ्गलं सदा।
दीपावली समायातु प्रतिवर्षं सुखान्विता।।

शुभचिन्तको
दुर्गादत्तः

रायबरेली
३१.१२.१९९७

बहुविभवविशिष्टं सौख्यसौभाग्यतर्षम्,
यम-नियम-निविष्टं देहदीप्तिप्रकर्षम्।
अभिमतहितसिद्धिं सर्वथा वै सहर्षम्
अविरतमिह देयाद् भूरिशो नव्यवर्षम्।।

प्रशस्यमित्रशास्त्री

नलेटी
(जिला कांगड़ा)
१.२.१९९८

प्रिय डॉ० सत्यव्रतशास्त्रिणः

नमस्कृतयः

वर्षो नवीनः समुपागतोऽयं
मासैः समस्तैः समलङ्कृतः सन्।
भवद्गृहे मङ्गलमातनोतु
प्रभोः प्रसादादिति कामयेऽहम्।।

सस्नेहम् भवदीयो
दुर्गादत्तः शास्त्री

नलेटी
( जिला कांगड़ा )
९.२.१९९८

प्रिय डॉ० सत्यव्रतभ्रातरः

सस्नेहं नमामि।

पत्रन्तु भवतां प्राप्तं परमानन्ददायकम्।
परन्तु मम काव्यस्य विषये नात्र वर्णनम्।।१।।

सैप्टम्बराष्टमदिवसे पुस्तकं प्रेषितं मया।
"संस्कृतकाव्यकुञ्जन्तु" पार्सलाभ्यन्तरे कृतम्।।२।।

चिरादहं प्रतीक्षायां व्यतिष्ठेऽत्र दिनं दिनम्।
भ्रातरो मे वदिष्यन्ति किञ्चित्तत्र शुभाशुभम्।।३।।

नावाप्तं चेद् भवद्भिस्तद् विस्मयो जायते महान्।
संसूचयन्तु मां शीघ्रं प्रेषयाम्यपरं द्रुतम्।।४।।

सादरम्
भवदीयो दुर्गादत्तः शास्त्री

नलेटी
( जिला कांगड़ा )
२७.१२.१९९८

नववर्षमङ्गलकामना:

गतिं स्वकीयां नियतां दधानो
वर्षो नवीन: समुपागतोऽयम्।
तनोतु भद्रं भवतां गृहस्थे
मनोरथा: सन्तु सदा फलाढ्या:।।

मङ्गलाकाङ्क्षी
दुर्गादत्त: शास्त्री

जयपुर
२६.१०.२०००

दीपावली शुभाशंसनम्

सुखायाऽस्तु हितायाऽस्तु ऋद्धये सिद्धये तथा।
प्रेयसे श्रेयसे चाऽस्तु दीपलक्ष्मी सदैव व:।।

शुभम्
प्रभाकरशास्त्री

।। नव खीष्टाब्दीये (२०००) शुभ कामना।।

कालः कल्पान्तकारी कलयति जगतीजीवनस्यायुरेतत्
वर्षं तस्यैकखण्डं भवति सुविदितं कर्मभिस्स्वेन युक्तैः।
दुर्बुद्धेरुग्रकर्मप्रशमनकरणे सौमनस्यप्रसारे
आतङ्कात् त्राणदाने कवचहरमिदं नूतनं वत्सरं स्यात्।।

चन्द्रदीपशुक्लः

वि०सं० २०५६

दीपावलि शुभकामना

दीपावली-पर्वणि मान्यवर्याः!
वन्देऽहमार्यान् भवतः सुधीन्द्रान्।
दीर्घायुरारोग्यमशेष-सौख्यं
याचेऽद्य लक्ष्मीं सुतरां भवद्भ्यः।।

लक्ष्मी-प्रसादाद् अयि आर्य वर्णाः।
सुदुस्तरं भीम-महार्घताब्धिम्।
यथा तथा वा चरितं तरन्तु
यस्मान्मिलेद् वाञ्छित-सौख्य-राशिः।।

निजेष्ट-देवे ह्सतान्न भक्तिः
परोपकारेऽस्तु सुबुद्धि-वृद्धिः।
सर्वत्र भूयात् परमात्म-दृष्टिर्
एतद्विना किं नर-जन्म सार्थम्?।।

भ्रष्टा चरित्रं निज-जाल-चक्रे
निपातयेन्नो भवतः कदापि।
प्रदूषितोऽनेन जनो यतो हि
भस्त्रेव जीवन्नपि जीवितो न।।

व्यक्तिं सदोदात्त-विचार माला
तस्याः पुनः सात्त्विक-जीवनं च।
यशस्विनीं सर्व-सुखैः सुपूर्णां
निर्मात एवात्र न संशयोऽस्ति।।

एतद्द्वयं भो भवतां कृतेऽहं
याचेऽद्य लक्ष्मीं नितरां दयालुम्।
स्वस्मै भवत्तोऽपि च पूज्यपादाः!
शुभाशिषोऽहं सततं समीहे।।

विनयावनतः
नारायणकाङ्करः

नागपुर
युगाब्दः ५०१०१

दीपावली शुभाशंसनम्

हितायाऽस्तु सुखायाऽस्तु
ऋद्धये सिद्धये तथा।
प्रेयसे श्रेयसे चाऽस्तु
दीपलक्ष्मीः सदा तव।।

क्षपयन्ती तमःस्तोमं तेजःस्तोमं वितन्वती।
विवृण्वती चिदानन्दं दीपलक्ष्मीः प्रसीदतु।।

श्रीधरभास्करवर्णेकरः
प्रज्ञाभारती

देहरीपालि सम्बलपुर

[तिथिनिर्देशोऽत्र नास्ति]

ॐ विश्वानां दुःखनाशं ये कुर्वन्ति नित्यमङ्गलम्।
तौ भुवनेश्वरौ वन्दे देवान् देवीश्च सादरम्।।

ॐ वर्णानामर्थसंघानां रसानां छन्दसामपि।
मङ्गलानां च कर्त्तारौ वन्दे वाणी-विनायकौ।।

अयि पूज्याः सदाशयाः!

भक्तिपूर्णं प्रणामं मे स्वीकुर्वन्तु महाशयाः।
निवदेयन्तु मात्रे च कृपया विश्व-वन्दिताः।। १।।

आन्तरिकं सदा भव्य-माशीर्वादं शुभावहम्।
संसूचयन्तु कृपया परिवारे विराजितान्।। २।।

पूर्व-वर्षद्वये विश्व-वन्दितानां कृते खलु।
संप्रेषितं विलम्बेन सत्वरं च तथा मया।। ३।।

भवदीयं कृपापत्रं पूर्वं चाधिगतं मया।
आसीन् मे सुदृढो भव्यो विश्वासो मानसे तदा।। ४।।

पुरस्कारं च प्राप्स्यामि महनीयं त्वनुग्रहात्।
राष्ट्रस्य माननीयानां पतीनां सर्वथा खलु।।५।।

नाधिगतः पुरस्कारो भवत्प्रस्तावनादपि।
सन्देहो मे महान् सत्यं न जाने कारणं पुनः।। ६।।

सत्यं मे योग्यता नास्ति पुरस्कारार्थमेव वै।
परं सा मे दृढं जाता भवत्-संसूचनेन हि।। ७।।

काचः काञ्चन-संसर्गाद् धत्ते मारकतीं द्युतिम्।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः।। ८।।

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति।
स्मृत्वा इमां सुखकरां कविवन्द्य-सूक्तिं
संप्रेषयामि भवतां पुनरन्तिकं वै।। ९।।

प्रेरणयैव पूज्यानां प्राच्यविद्या-सुमेलने।
पण्डितानां सभायां वै योगदानं कृतं मया।। १०।।

ॐ विश्वानां दुःखनाशं ये कुर्वन्ति नित्यमङ्गलम्।
तौ भुवनेश्वरौ वन्दे देवान् देवीश्च सादरम्।।

ॐ वर्णानामर्थसंघानां रसानां छन्दसामपि।
मङ्गलानां च कर्त्तारौ वन्दे वाणी-विनायकौ।।

सिध्यन्ति कार्येषु महत्स्वपि यन्नियोज्याः
संभावना-गुणमवेहि तमीश्वराणाम्।
किं वा ऽ भविष्यदरुण-स्तमसां विभेत्ता।
तं चेत् सहस्र-किरणो धुरि नाकरिष्यत्।।
*-शाकुन्तले-७*

दुष्यन्तं-वचनं चेदं स्मारयामि पुनः पुनः।
प्राप्स्यामि तु पुरस्कारं भवदनुग्रहेण वै।
श्री जगन्नाथ-देवस्य पुण्यक्षेत्रे निवासिनाम्।
संप्रत्यपि स्मराम्येव पूर्वप्राप्तां सुसङ्गतिम्।।
संसूचनेन पूज्यानां समये प्रेषणेन वै।
प्राप्स्याम्येव पुरस्कारं विश्वासो मे दृढोऽस्ति हि।।
कुशलं सूचयित्वैव पत्रस्य प्रेषणेन वै।
अनुग्रहं करिष्यन्ति कृपया विश्व-वन्दिताः।।

श्रीजगन्नाथ-देवस्य (संस्कृत) विश्वविद्यालये खलु।
पूर्व-कुलपतीनां वै (भवतां) श्रद्धेयः श्रीसदाशिवः।।

सूचना

बाङ्गालोरे तु संजाते विश्व-संस्कृत-मेलने।
पठितौ प्रेषयाम्येव प्रबन्धौ भवतां कृते।।

नवीनं भवनं चात्र देवीक्षेत्रे सुनिर्मितम्।
परमासे गमिष्यामो दीयते सूचना त्वधः।।

सदाशिव प्रहराजः

देहरीपालि
सम्बलपुर
४.५.२०००

अयि महानुभावा:

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।
सत्यस्य सत्यमुत-सत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्ना:।।

श्रीमद्भागवते, १०.२.२६

भक्तिपूर्णं प्रणामं मे स्वीकुर्वन्तु महाशया:।
निवेदयन्तु मात्रे च कृपया विश्वविश्रुता:।।
परिवारे च ये सन्ति पुत्रपौत्रादय: किल।
आशीर्वादं सदा भव्यं कृपया सूचयन्तु तान्।।
भवदीयं कृपापत्रं (२३.३.२०००) संप्राप्तं समयेन वै।
बलेन यस्य सम्मान-प्राप्तिर्मे निश्चिता मति:।।
नवगृह-प्रवेशार्थं भृशं कर्मणि व्यापृत:।
पुनर्विशेष-कार्येण श्रीभुवनेश्वरं गत:।।
इच्छतापि मया तस्मात् प्रेषणीयापि सर्वथा।
कृतज्ञता हृदो नैव तत्कालं विनिवेदिता।।
श्रीभुवनेश्वरादेव स्वगृहं ह्य: समागत:।
निवेदयामि चाद्यैव हृदयस्य कृतज्ञताम्।।
क्षमाशीला: सदा सन्त: परोपकार-तत्परा:।
अत एव चाग्रजैस्तु क्षमणीयोऽनुजो मुदा।।

सदाशिवप्रहाराज:

दुःखवार्त्ताः

बहुपूर्वं दिवं यात आचार्यो लड्डुकेश्वरः।
भागवत-त्रिपाठी च साहित्यस्य दिवं गतः।।

आचार्यः कृष्णचन्द्रस्तु गते मासे दिवं श्रितः।
उत्कल-संस्कृताकाशे भवतां बहु विश्रुताः।।

श्री जगन्नाथ देवस्य (संस्कृत) विश्वविद्यालये पुरः।
पूर्वकुलपतीनां वै श्रद्धेयः श्रीसदाशिवः।।

जयपुर
विजयदशमी, वि०सं० २०५७

श्रीरामचन्द्रं नौमि, दशरथ-तनयं जनकात्मजा-वरम्।
स्व-शरणागत-रक्षकं, रघुकुल-तिलकं सुख-शान्तिदम्।।१।।

मा-शारदायाः प्रिय-पुत्रकेभ्यः, सदध्वगेभ्यः शुचि-मानसेभ्यः।
नमो भवद्भ्यः सकुटुम्बकेभ्यः सत्यव्रतेभ्यः सुधियां वरेभ्यः।।२।।

विजय-दशम्या सार्धं दीपावलि-पर्व सपरिवारेभ्यः।
तत्रभवद्भ्यो भवद्भ्य आर्या! अभीष्टदो बोभोतु।।३।।

छन्दो-निबद्धं मधुरं मनोज्ञं, सानुग्रहं स्नेह-परिप्लुतं च।
श्रैमत्क-पत्रं समवाप्य मान्याः! मनोमयूरो मम मोमुदीति।।४।।

धन्योऽस्म्यहं यस्य सुवर्ण-हारो, भातो भवद्भ्यः कविपुङ्गवेभ्यः।
कार्त्तज्ञ्यमस्मै च सदा वहामि विनीतनारायणकाङ्करोऽहम्।।५।।

मुम्बई
१६.११.२००१

महाशय

मामकनमांस्यनेकानि।

दीपावलिशुभाकांक्षासहितं मत्प्रहितं हितं
भवान् गृह्णात्विदं पत्रं कांतं विनतिलांछितम्।।
ददः सकलसंपदामपारकरुणापगावल्लभः।
कदंबतरुमूलसंश्रितः श्रितसगोपगोपीजनः।। १।।

मुदास्पद उदारगोगणाहतिपदः सर्वशीकरः।
सदाऽवतु हरिः स नस्सुधांशुवदनो यशोदासुतः।। २।।

भामाऽयुतधवः सत्य-भामामणि धवो, धवः।
मया, मायाविहारज्ञः पातु नो नरकांतकः।। ३।।

चैद्यध्वंसी वासुदेवो युधिष्ठिरसमर्हितां-
घ्रिद्वयो नृहरिः कृष्णः तमोघ्नो द्युतिमत्तमः।। ४।।

नमोवाकं ब्रूमो नयनरमणीयाननवते
नमस्कारं कुर्मो भयनिकरविद्रावणकृते।
हरे त्वत्पादाब्जप्रकटयुगलायाऽद्भुतयशो-
विशालायाऽशीस्संततिविनिम्रयोत्साहसुभृते।। ५।।

इति प्रार्थनोपेतो वचःस्तवः
बुधजनविधेयः
चिन्तगुण्टसूर्यनारायणः

मुम्बई
१३.७.२००२

आर्य महाशय,

नूतनसंवत्सरारंभसंदर्भे मया प्रेषितलेखस्य भवत्प्रत्युत्तरं द्वित्रिदिनपूर्वमेव मम हस्तगतमासीत्, महान्तमानंदं च प्राकल्पयत्। अथ

वयोवृद्धो भवानस्ति वयोवृद्धोहमस्मि च।
ततः किं पाटवं मत्याः भवेत्प्रभुदयागुणात्।।१।।

जरठत्वं च रुग्णत्वं नरभारकरे उभे।
निलीयमानसाराऽपि वरारोग्यवती जरा।।२।।

इह+ईदृशी+अस्मादृशी

दिष्ट्या प्रवृत्तिः शक्तेरिहेदृश्यस्मादृशां किल।
तत्प्रेरितास्तदेवास्यै दद्मः कर्मोचितं च नः।।३।।

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे।
काव्यामृतरसास्वादः संलापः सज्जनैः सह।।४।।

सालोक्य सिद्धिः संपाद्या द्वयेनानेन, नान्यथा।
स्वाध्याय इति या पूर्वं पद्धतिः भवता स्तुता।।५।।

सा पद्धतिः प्रपुष्टा स्याद् द्वयेनानेन नित्यशः।
इति मन्ये, रोचते मे कालक्षेपस्तदा स्थितः।।६।।

वामलूरुतनयामृतं गिरां
कालिदासकवितासुसौरभम्।
षेक्स्पियर्मृदुततरार्द्रता हृदः
काव्यधोरणिकलाविलेखिनीम्।

पोतनादिविद्वद्वतंसं
संपादितामलप्रोज्वलांध्रवाग्-
वैभवं समं भक्तिभावभृत्
संस्मरामि सप्रश्रयं सदा।।८।।

रवींद्रांजतासंप्राप्तगीतालीतः प्रकल्पितम्।
गीर्वाणभाषालिन्याससंपन्नां रुचिरां मुदा।।९।।

मज्जिह्वाग्रतो वेद्यां भारतीमिन्दुशीतलाम्।
गानामृताभिधानां कल्याणीं संभावयाम्यहम्।।१०।।

कैंकर्यं शंकराचार्यवाणी परशिवात्मिका।
मत् प्राप्नुयात् ज्ञानरथ्यारूढा भक्त्युपदेशिका।।११।।

नंदनंदनसौंदर्यमंदिराननिस्सृता।
व्यासवाग्वाससः पूता गीता चिद्वारिवाहिनी।।१२।।

मदध्वपावनी कुर्यान्मेऽनिशं मङ्गलं भृशम्।
इति चिन्तयतः पुस्तकैरन्यैरलमत्र मे।।१३।।

क्षीराद्दधिवदिच्छामि प्राप्तुं वस्तु निधानतः।
पदभ्रंशो वान्यलोपः ज्ञेयो योऽत्र सहे न तम्।।१४।।

चरमपङ्क्त्यां भवानिति कर्तृशब्दः ग्रहणीयः भवति। अद्य सूर्यो भगवान् मकरराशिसंक्रांतिं करोति। अद्य उत्तरायणपुण्यवेलायां आरोग्यं भास्करादिच्छेत् इति नमस्कारप्रियः सूर्यः इति च वाक्ये संस्मृत्य भगवंतं तं वयं सर्वे प्रपद्यामहे।

बहु लिखितं सांप्रतं मयेति वेद्मि। एवं भवद्विधेयः
चिंतगुंटस् सूर्यनारायणः

त्रिभाषाप्रालम्बैकविद्याभूषाधिमानसः।
विज्ञाभिज्ञानाभिलाषाकेतनच्छविमत्करः।।

चिंतगुण्टसूर्य नारायणः

मुम्बई
१९.११.२००२

आर्य महोदय,

इतः पूर्वं प्रेषिते

मम द्वे पत्रे भवद्धस्तमुपगते अहमिति मन्ये तयोः द्वितीयं भवतः काव्यपुरस्कारविषयकं हर्षप्रयुक्तिमदासीत्। आंग्ललिखितं च। अद्य महाशिवरात्रिपर्वदिने रामकीर्तिपठनं च आमूलाग्रपरिशोध्न-समाप्तिमेकवारं कृत्वा परमामोदमहमाप्तवान्। पुनः पुनरास्वादार्हमस्ति काव्यवस्त्वित्ति असंशयम्।

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्।।१।।

किं तु वाल्मीकिना प्रोक्तं सीतायाश्चरितं महत्।
इति रामायणकथामधिकृत्य, न वा भवेत्।।२।।

किमतथ्यं वाऽपि तथ्यं किमित्यस्ति तु संशयः।
स विद्राचित एवाऽस्ति थाईरामकथामृतेसृतेः।।३।।

अन्ते यत्सा सती सीता धृष्टतासहिता स्थिता।
सदाशिवस्य निर्धारश्चादृतस्तृप्तया तया।।४।।

कल्याणकृदुदंतः सः भवत्काव्यांतसंस्थितः।
सीताकल्याणकृच्छोभां दद्याल्लोकाय निस्तुलाम्।।५।।

चिन्तगुण्ट सूर्यनारायण (सूरिः)

यतः 'सूरी'ति संबोधः मम बाल्ये स्थितो गृहे।

तथा सर्वजनप्रेमपात्रं नामाऽभवत्तदा।
तदेवाद्य प्रगृह्णामि मुदाऽयं प्रथमोऽवसरः।।

इति शम्।

भवत्क्षेमकथाभ्यर्थी

चिन्तगुण्ट सूर्यनारायणः

वाणीविहारत:

०१.०१.०३

आनन्दो विपणी प्रसादकणिका निर्माल्यकैवल्यदा

व्यूहे भोगपुरीसमाश्रिततनुर्नीलाचले राजिता।

रूपारूपगुणागुणैश्च कलिता मूर्त्तिश्चतुर्धा हिते

वह्निव्योमखबाहुकालसकला पायादपायाज्जगत्।।

श्रीगोपालकृष्णदासः

सरस्वती विहार
दिल्ली
१३.६.०३

परमश्रद्धेया गुरुवर्याः

तत्रभवत्सु सत्सु सन्ति मे प्रणतिततयः।

लब्ध्वा महान्तमानन्दं शुभपत्रेण धीमताम्।
आत्मानं गर्वितं मत्वा सन्तुष्यामि पुनः पुनः।। १।।
पुरस्कृतं भवद्वाक्यैः प्रोत्साहनपदैः शुभैः।
मन्येऽहं धन्यमात्मानं तनुवाग्विभवोऽपि सन्।। २।।
गुरूणामनुकम्पात्र भवतामाशिषः सदा।
मया साकमवर्तन्त परमं भाग्यमेव मे।। ३।।
गुरूणामाशिषः पुण्याः शिरसि सन्तु पूर्ववत्।
प्रकाशतां मयि ज्ञानं तदेव सम्बलं महत्।। ४।।
पार्किन्सनेन रोगेण स्नायुप्रभावितस्य मे।
क्वचिच्चलनवेलायां स्खलनमनुभूयते।। ५।।
तत्र प्रभोः कृपा भूयो मयि सदा प्रवर्तते।
लेखनं चैव यत् किञ्चित् पठनं चलति ध्रुवम्।। ६।।
गुरूणां हि कृपा सर्वा गुरवो मे निदर्शनम्।
यद्धि कृतमधीतं वा गुरवस्तत्र कारणम्।। ७।।
तान् ध्यात्वाहं लभे शान्तिं तान् ध्यात्वा च लभे श्रियम्।
तान् ध्यात्वा पठनं सम्यक् तान् ध्यात्वा लेखनं कृतम्।। ८।।

विनीतः कृपाकाङ्क्षी
कृष्णलालः

दीपावलिपर्व
वि०सं० २०५९

नमांसि भूयांसि भवद्भ्य आर्याः।
दीपावली-पावन-पर्व-काले।
प्राप्नोमि प्रत्यब्दमहं भवद्भ्यः
शुभाशिषं मङ्गल-कामनां च।। १।।

अहो मदीयं महदस्ति भाग्यं
स्निह्यन्ति नित्यं मयि यद् भवन्तः।
कार्तज्ञ्यमस्मै गदितुं तु मान्याः!
शब्दैर्दरिद्रोऽस्मि, मृषा न वच्मि।। २।।

स्थैर्यं न यावन्मनसो न शान्तिर्
दीपावली-पर्व कथं हि मान्यम्?
दरिद्रता चापि पुनः सहर्षं
सम्पादनेऽद्यास्त्यति बाधिकैका।। ३।।

आतङ्कवादेन निबद्ध एष
देशोऽस्मदीयोऽप्यति पीडितोऽस्ति।
अज्ञान-गाढान्धतमोऽसतां हि
दीपावलीयं कुरुताद् विनष्टम्।। ४।।

लक्ष्मीर्यथा स्याद् धनदा समेषां
बुद्धिं च संशोधयताद् यथैव।
लक्ष्मीं तथा मातरमद्य मान्याः!
सम्प्रार्थये सत्य-हृदा सनामम्।। ५।।

स्वास्थ्यं शरीरे मनसि प्रसादम्
आस्तिक्यमीशे ऽतुलितां समृद्धिम्।
आयुः सुदीर्घं विपुलं यशश्च
लक्ष्मीः प्रदद्यात् सततं भवद्भ्यः।।६।।

सार्धं कुटुम्बेन मनीषि-वर्याः!
दीपावली-माङ्गलिकोत्सवेऽस्मिन्।
लक्ष्मीं तदेवं ह्यसकृद् भवद्भ्यो
याचामि नारायणकाङ्क्षरोऽहम्।।७।।

दीपावलिशुभकामना
वि०सं० २०५६

दीपावलि-पर्वणि मान्य वर्या!
वन्देऽहमार्यान् भवतः सुधीन्द्रान्।
दीर्घायुरारोग्य मशेष-सौख्यं
याचेऽद्य लक्ष्मीं सुतरां भवद्भ्यः।।

लक्ष्मी-प्रसादाद् अयि आर्य वर्याः!
सुदुस्तरं भीम-महार्घताब्धिम्।
यथा तथा वा चरितं तरन्तु
यस्मान्मिलेद् वाञ्छित-सौख्य-राशिः।।

निजेष्ट-देवे ह्रसतान्न भक्तिः
परोपकारेऽस्तु सुबुद्धि-वृद्धिः।
सर्वत्र भूयात् परमात्म-दृष्टिर्
एतद् विना किं नर-जन्म सार्थम्?।।

व्यक्तिं सदोदात्त-विचार माला
तस्याः पुनः सात्त्विक-जीवनं च।
यशस्विनीं सर्व-सुखैः सुपूर्णां
निर्मात एवात्र न संशयोऽस्ति।।

एतद्द्वयं भो भवतां कृतेऽहं
याचेऽद्य लक्ष्मीं नितरां दयालुम्।
स्वस्मै भवत्तोऽपि च पूज्यपादाः!
शुभाशिषोऽहं सततं समीहे।।

विनयावतः
नारायणकाङ्करः

।। श्रीः।।

दीपावलीयं भवतां कुटुम्बे, वृष्यात् सुखं शान्तिमथो समृद्धिम्।
लक्ष्मी-प्रसादाच्च सुदीर्घमायुः, सुस्वास्थ्यमास्तां भवतां समेषाम्।। १।।

अनीतिवादोऽथ, महार्घताऽपि, सन्तापयेतां भवतः क्वचिन्न।
भक्तिः स्वदेशेऽथ रतिः स्ववाण्यां, प्रवर्धतां भो! भवतामजस्रम्।। २।।

ईश-स्मृतिस्तिष्ठतु सर्वदैव, परोपकाराद् विरतिर् भवेन्न।
दीनेषु कारुण्य-परं मनोऽस्तु, सुबुद्धिरास्तां रचनात्मिका च।। ३।।

ईदोत्सवो दीपमहोत्सवेन, सहागतो विश्व-शिवाय नूलः।
ददातु प्रत्येक-जनाय सद्यः, स्वाभीप्सितं कामय एवमार्याः!।। ४।।

दीपांवली-पावन-पर्वणीत्थं, लक्ष्मीं भवद्भ्यो हृदयेन याचे।
शुभाशिषं चापि भवद्भ्य इच्छन्, इहैव मान्याः! विरमाम्यहं भोः।। ५।।

सादरं सदैव वन्दमानः
नारायणकाङ्करः

जयपुर
२४.३.२००५

श्रीशः पायात्

भो सात्त्विकाहार-विहार-शीला, माया-प्रपञ्चच्छल-छद्म-शून्याः।
मा-शारदायाः सुतरत्नभूता, नमो भवद्भ्यः सततं नमोऽस्तु।। १।।

पत्र-प्रसादं भवदीयमिष्टं, सुस्वाद्यमास्वाद्य परं प्रसन्नः।
मन्ये स्वमात्मानमतीव धन्यं, स्निह्यन्ति यस्मिन् सुधियो भवन्तः।। २।।

विशेषणैर्यैर्जनमेतकं भो, संयोजयन्ते प्रतिवारमेव।
तत्पात्रतां नैष कदापि धत्ते, पिपीलिका चुम्बति किं सुधांशुम्?।। ३।।

बह्वस्ति कार्यं न तथास्ति जीवनं, स्व-पत्रके यल्लिखितं सनातनम्।
तथैव तन्नूनमिहात्र वर्त्तते, मान्या! विरुद्धं प्रकृतेः क आचरेत्?।। ४।।

स्वास्थ्यं स्वकीयं च सुरक्षतैव, कार्यं यथाशक्ति विधेयमत्र।
सर्वोऽभिलाषो न कदापि पूर्णः, सञ्जायते कस्यचनापि पूज्याः!।। ५।।

एवं विचार्यैव प्रवर्त्त्यमत्र, स्वात्मा किमर्थं परितापनीयः।
येभ्यः श्रमो भूरि विधीयते हा! पृच्छन्ति तं तेऽपि दिवङ्गतं न।। ६।।

एषैव रीतिर्जगतीह मान्याः! चिराच्चलन्ती दृशमेति मे तु।
मन्ये भवन्तोऽपि समर्थयेरन्, मन्तव्यमेतत् कटु मामकीनम्।। ७।।

यशः शरीरेण सुजीवनार्थं, किञ्चिद् विशिष्टं तु विधेयमेव।
स्वनामधन्याः कवयः पुराणा, वाल्मीकि-तुल्या इह सन्ति दृश्याः?।। ८।।

मनीषितं भो भवतां समस्तं, सम्पूरयेद् विघ्नहरो द्विपास्यः।
अनुग्रहस्तस्य महामहीयान्, आस्तां विपश्चित्सु भवत्स्वसीमः।।

आर्याः! स्वमेवं विनिवेद्य हार्दं
श्रीमातृपादेषु च वन्दमानः।
विराममभ्येमि नमन् भवत्सु
श्रैमत्कनारायणकाङ्करोऽहम्।।

जयपुर
वि० सं० २०६४

श्रीः

चतुःषष्ट्यधिको विंश, एष नूत्न-वैक्रम-वर्षो भवते।
मङ्गलमयोऽस्तु नित्यं, सुखकारी हर्ष-वर्षुकश्च।।१।।

दुःखं भवतु न कदापि, साफल्यं लभतां प्रतिपदं भवान्।
सकुटुम्बोऽस्तु स्वस्थो, दीर्घायुर्यशस्वी सदैव।।२।।

मार्चे श्रीमद्दर्शन-लालसा मनस्येव मनसि स्थिता।
अपूर्णामिमां श्रीशः पिपर्त्त्वाशिवति तं याचेऽहम्।।३।।

श्रीमदिङ्गितं मान्याः! स्मारकं वचसोऽस्य मे।
ऋषीणां पुनराद्यानां, वाचमर्थोऽनु धावति।।४।।

स्वीकृति-सूचकं पत्रं प्राप्तं, तत्प्राप्ति-सूचकम्।
चापि पत्रं प्रदत्तं हि, प्रेषकायाधुना मया।।५।।

इत्येव नव-वृत्तं हि, नान्यद्, विद्यते किञ्चिदुल्लेख्यम्।
अतः सम्प्रति विरमामि, प्रणमन् बहुकृतज्ञो मान्याः!।।६।।

पुनश्च मातृपादाब्जयुगलेऽस्मदीय-प्रणतयो निवेद्याः।
तद्दर्शनलालसाऽपि समेधत एव शुक्लेन्दुवत्।।७।।

विनयावनतोऽहमस्मि श्रीमद्भवत्कृपाकणिकाकाङ्क्षी।
कवि-कोविद-किङ्करोऽत्र कश्चन नारायणकाङ्करः।।८।।

२५.८.२००३

।। श्रीः पातु।।

श्रीमन्तः शास्त्रिणो मान्याः! सप्रणामं निवेद्यते।
विलम्बादौत्तरं पत्रं दीयते क्षम्यतां ननु।।

यथा लब्धं भवद्भिस्तत्प्रहितं पत्रकं मम।
कालात्यतया हन्त! तथा तद् भवतो मया।।

किन्तु कालो बलीयानप्यकिञ्चित्कर एव सः।
भवादृक्सुयशोभूतिविद्वद्वरविभूतिषु ।।

अवश्यं स्वानुकूलत्वादभीष्टं विषयोचितम्।
निबन्धं विरचय्यात्र प्रेषयन्तु विपश्चितः।।

श्रीमद्विद्यानिवासस्य काशिकेयमनीषिणः।
नाभिनन्दनसम्पूर्तिर्भवादृग्लेखमन्तरा ।।

एकदैव द्विधैवासौ भवत्साक्षात्कृतिर्मम।
सौहार्दहार्दसंवादसंस्मृतिं पर्यकल्पयत्।।

भूयोऽप्यभ्यर्थये चान्ते स्वान्तेन प्रणिवेदयन्।
नूनं गद्यात्मपद्यात्मलेखबन्धः प्रहीयताम्।।

स्वास्थ्यमारोग्यमायुष्यं माङ्गल्यं कीर्तिसौरभम्।
सर्वतो भावतो भावान् भवतो भावयन्त्वलम्।।

शिवजी उपाध्यायः

पश्चिम बङ्गदेशः
२९.९.२००३

परमश्रेद्धय-महामहोपाध्याय-पद्म-श्रीयुक्त

डा० सत्यव्रतशास्त्रिमहोदयानां शुभवर्षवृद्धिदिवसे शुभाशंसनम्

वाणी मूर्ता वसति नितरां रम्यकम्ये यदास्ये
जिह्वाग्रे च प्रसरति वचो सर्वशास्त्राभिरामम्।
स त्वं श्रीमन् जगति विलसन्नात्ममाहात्म्यपूर्णै-
र्जीव्याश्चैवं सुख-समुदितः श्रेयसा वर्धितायुः।।

दिगन्त-विश्रान्तयशोधनाय
प्रेमावदाताय बहुश्रुताय।
निवेदयामो बहुमानपूर्वं
अभ्यर्थना ते परिगृह्यतां मे।।

इति
प्रेमधन्येन गुणमुग्धेन
श्री ध्यानेशनारायणचक्रवर्तिना

दिल्ली
१.१०.२००३

परमश्रद्धेया गुरुवर्याः

सादरं प्रणम्य ब्रवीमि।

प्रमोदावहोऽयं प्रकर्षं तनोति
मनो मे प्रकामं प्रफुल्लं करोति।
पुरस्कारमानस्तु जैनीयलब्धः
सदा सन्ति सम्मानयोग्या महान्तः।।

कृष्णलालः

६.१२.२००३

श्रीमन्तो भगवत्पादाः।

नमांसि भूयांसि चरणनलिनेषु।

अवाप्तं भवतां पत्रं चक्षुषोर्व्याधि-सूचकम्।
पठित्वा तद्गिरां रत्नं परं खेदं गतं मनः।।

दुःखप्रदा पुरैवासीद् रुजा मातुररुन्तुदा।
तत्रापि भवतां कष्टं जातं चेतः प्रमाथि हि।।

गुरोः गुरुतरं कष्टमसह्यं सुतरां मया।
कथमपाक्रियेतेदं चिन्ता मां बाधते भृशम्।।

दूरस्थो भवतां शिष्यः सदा सेवा-समुत्सुकः।
प्रतीक्षते भवद् दिष्टिम्, आदिशन्तु यथेच्छितम्।।

नात्र कश्चन संकोचः करणीयः कथंविधः।
समर्थः सेवितुं ताताः! यत्र कुत्रापि प्रेरितः।।

द्विसप्ताहमतिक्रम्य प्राप्तं पत्रं चिरान्ननु।
पत्रोत्तरे विलम्बोऽयमुपेक्ष्यो गुरुभिर्मम।।

देवदत्तभट्टिः

२९.५.२००४

हरि ॐ

मा-शारदायाः प्रिय-वत्स-वर्य्या, विद्वद्वरेण्याः कवि-वृन्द-वन्द्याः।
सत्यव्रताः सार्थक-नामवन्तो, नमो नमस्तत्रभवद्भवद्भ्यः।।१।।

त्रिंशे दिनाङ्के गत-मास एव, शुभाक्षरैरङ्कितपत्रमद्य।
चिराय भावत्कमवाप्य मान्याः! मोदं लभेऽतीव लिखामि सत्यम्।।२।।

चिन्ताऽनिशं या भवतः कवीन्द्रान्, तातोत्त्यहं चापि तयैव तुन्नः।
मा शारदा केवलमावयोः वां कर्त्रीति नात्राति विचिन्तनीयम्।।३।।

सत्यं हि कायः कृश एव नूनम्, आत्मापरं तत्र तथास्ति नैव।
बलिष्ठ आत्मैव समस्तमिष्टं, संसिद्धिमापादयितेति वेद्यम्।।४।।

यल्लिख्यते तस्य प्रकाशनार्थं, व्ययीकृतेऽपि निज-वित्त-राशौ।
क्रेता न कश्चिन्मिलते तदीयः प्रकाशनं नश्यति हा! तदित्थम्।।५।।

पाठ्यक्रमे यस्य नियोग आस्ते, क्रीणन्ति छात्रा अपि तत्तदेव।
क्रीत्वा परं तत् पठितुं प्रवृत्तिर्, हा हन्त! विद्वत्स्वपि नेक्ष्यतेऽद्य।।६।।

लेख्यं प्रकाश्यं विपुलं धनं स्वं, व्यर्थं व्ययीकृत्य किमर्थमद्य।
अयं विचारश्च पुनः पुनर्मे, मान्याः! शिरो घूर्णयते नितान्तम्।।७।।

प्रकाशकाश्चापि कृपाकरा न, सर्वेऽपि ते लेखक-शोषका हा।
प्रकाशकाः सम्पदमर्जयन्ति, विन्दन्त्यलं किन्तु न लेखका हि।।८।।

इत्थं विचाराकुलितो न वेद्मि, कर्त्तव्य-मार्गं सुधियः! स्वकीयम्।
ब्रुवन्तु मां किं करवाणि मान्याः! यतो भवन्तोऽनुभवे महान्तः।।९।।

सद्भिर्भवद्भिः सह सङ्गतिर्मे, रोरुच्यते शब्द-चयैरवर्ण्या।
विच्छिन्नतामेतु कदापि नैषा, यायाच्य ईशं ह्यसकृत् प्रणम्य।। १०।।

विद्यतां सन्ततमेव सेयं, परात्परस्यानुगृहीतिरस्तु।
मा-शारदाऽप्यत्र न मुञ्चतु स्वां, कारुण्य-दृष्टिं शिवमादधानाम्।। ११।।

स्वस्था भवेन्मे जननीव पूज्या, माता भवच्छक्ति-प्रदायिनीह।
तत्पाद-पद्म-द्वयके मदीयाम्, असंख्य-साष्टाङ्गनतीर्भुवन्तु।। १२।।

स्वस्था भवन्तोऽपि च दीर्घमायुर्, यशःसमृद्धिं परिलभ्य मान्याः!
सरस्वती-कोष-समेधने स्वं, यच्छन्तु योगं सततं प्रशस्यम्।। १३।।

पुत्रैः प्रपौत्रैः सह कन्यकाभिः प्रमोदमानाः परिवार-मध्ये।
सामान्यभावाश्च सुधी-समाजे, जीवन्तु सौख्येन सहस्र-वर्षान्।। १४।।

इति स्व-हार्दं विनिवेद्य मान्याः! श्रीमत्-कृपेप्सुः सुधियां धुरीणाः!
नारायणः काङ्कर एष नित्यं, नमन्निहैवैति विराममद्य।। १५।।

जयपुर
१३.७.२००४

।। श्रीः ।।

सुधीवर-श्रीयुत-चारुदेव-प्रियात्मजान् पण्डित-पुङ्गवान् हि।
सत्यव्रतान् दिल्लि-निवासिनोऽहं, समानमानम्य निवेदयामि ।। १ ।।

पितुर्जयन्त्यां भवदीय-भव्यं, सन्देशमासाद्य दिनेऽद्य मान्याः!
आनन्द-सन्दोहमसीममत्र, पार्षत्-सदस्यैरनुबोभवीमि ।। २ ।।

गङ्गाधरान् पण्डित-पुङ्गवांश्च, श्रैमत्क-सन्देशमितो दिशामि।
स्वीया नतीस्तेऽपि च मन्मुखेन, सम्प्रेषयन्तेऽत्र भवद्-भवद्भ्यः ।। ३ ।।

अपात्रता-धृग् लभते प्रतिष्ठां, सुपात्रता-धृग् लभते च तां न।
सहानुभूतिर्मम चात्र पूर्णा, वेविद्यते मान्यवरा! भवद्भिः ।। ४ ।।

प्रवञ्चिता हा! कतिशो भवन्तः, प्रकाशकैर्दुष्टजनैस्तदेतत्।
ज्ञात्वाऽति खिद्ये प्रतिकार्यमत्र, कथं तदेतत्तु विचिन्तनीयम् ।। ५ ।।

प्रकाशकानां विषयेऽस्ति या मे, सन्धारणा, सा भवतामपीह।
अस्यां स्थितौ लेखक-कार्य-सम्पत्, सुरक्षिता हा! कथमत्र तिष्ठेत्? ।। ६ ।।

एतत्-समाधानमहन्तु मान्याः! शोचं हि शोचं नहि लोकयामि।
गवेषयित्वा कृपया श्रमेण लिखन्तु मामार्य-वरा भवन्तः ।। ७ ।।

श्रीमन्त आर्या बहु-विश्व-विद्या-लयीय-पाठयक्रम-सङ्गताश्च।
अतोऽस्मदीया अपि तत्र काश्चित्, सम्मेलयन्त्वद्य कृतीः समीक्ष्य ।। ८ ।।

सर्वा अमूस्ताः कृतयो भवद्भ्यः, समर्पिताः सन्ति समीक्षणार्थम्।
लेख्याः समीक्षाः क्रमशश्च तासां, पाठ्यक्रमे ताश्च पुनर्निवेश्याः ।। ९ ।।

पादाब्जयोर्मे प्रिय-पूज्य-मातुः, प्रस्तोतुमार्याः! प्रणतीः प्रभूताः।
बद्धाञ्जलिर्भोः! विनयेन सार्धं, निवेदयेऽहं प्रणमन् भवत्सु।।१०।।

अतो भवन्तः कृपया ममैताः, निवेदयन्तां प्रणतीस्तु तस्यै।
शुभाशिषां राशिभिरत्र मातुर्, मामोत्ति तुच्छोऽपि जनो न कः कः?।।११।।

विशेषणैर्यैश्च भवन्त आर्याः, सम्बोधयन्ते सततं च मां हि।
तेषां न पात्रत्वमहं कदापि, बिभर्मि तुच्छो, न मृषा वदामि।।१२।।

तथापि शब्दैर्नहि वर्णनीयो यः स्नेह-राशिर्भवतां मयीह।
स्व-पूर्व-जन्माऽर्जित-पुण्य-राशिं निमित्तमस्मै कथयामि मान्याः।।१३।।

आर्याः सभार्याः सुचिरं भवन्तः समृद्धिमन्तो यशसा श्रिया च।
स्वस्थाः शरीरे च तथैव चित्ते जीव्यासुरित्येतदहं सदेहे।।१४।।

एतावदेवाद्य निवेद्य मान्याः! स्वकीय-हार्दं विशदं भवत्सु।
भवत्-कृपेप्सुर्विरमामि तावद् विनीतनारायणकाङ्क्षरोऽहम्।।१५।।

हैदराबाद
१५.७.२००४

श्रीयुत पण्डितकविवरेण्य सत्यव्रतशास्त्रिभ्यो नमांसि

अथ

अद्यतनमासस्य।। "दिनाङ्करहितं पत्रं अधुना भवतः प्राप्य अत्यन्तं सम्मुदितोऽस्मि"।

कार्यानुषङ्गो गुरुभारयुक्तः
भवेत्सदा लोकविलोकनानाम्।
भवादृशानामिति दुःखभावः
किमत्र? सन्मोददमेव मन्ये।। १।।

यदा कदाऽपि स्खलनं स्मृतेर्यत्
तदात्मनिन्दाप्रकटप्रकारः।
माऽभूत् भवद्भ्यः सुजनोपकृद्भ्यो,
न वा ममाऽऽसीत् तदुपेतभावः।। २।।

ममैव कालस्य तु यापनोद्यमं
निवेदयिष्यन्नुपविष्टवानहम्।
गतस्य पत्रस्य विलेखनार्थं
यदात्मसंतुष्टिकरं तदासीत्।। ३।।

संप्राप्य लेखां समुदारबुद्ध्या
संप्रेषितामद्य मुदा समन्वितः।
भवामि, किं वा लिखितुं ममाऽस्ति?
खिला न मैत्री भवतान्मिथो नौ।। ४।।

कालः प्रकामं लिखनाद् व्रजत्यहो,
संप्रेषणार्थं लिखतो हि पत्रम्।
एतावती मे भवतीव चिन्ता
तदा तदा माऽस्तु निरादृतिस्तथा।।५।।

यन्नूतनं निर्मितमस्ति काव्यं
तन्मित्रवृन्दश्रवणप्रमोद-
योग्यं ममाऽऽस्तामिति नित्यवाञ्छितं
भवत्यतीतं, भवति व्यतीतम्।।६।।

चिन्तगुण्टसूर्यनारायणः

दिल्ली
२२.९.२००४

परमश्रद्धेया गुरुवर्याः

स्वीक्रियतां मे विनम्रः प्रणामाञ्जलिः।

शार्दूलविक्रीडितपद्यबद्धं पत्रं गुरूणां सुमनोज्ञमस्ति।
स्मेराननांस्तेन पुरःस्थितान् मे पूर्वं यथाभूत् सपदि स्मरामि।।१।।

अहोभाग्यमेतन्मदीयं तदासीत् तटे ज्ञानसिन्धोरविन्दं सुमुक्ताः।
अपृच्छं गृहं चैव गत्वा स्वशङ्का अभूवं न तृप्तः कुतो ज्ञानतृप्तिः।।२।।

महाब्धेः सकाशं पिपासास्ति वृद्धा विचित्रः सुपूज्यस्तु भावो मदीयः।
न वास्त्येव किंचिद्विचित्रं महान्तः पिपासुर्जनः स्यात् पुरस्तोयराशेः।।३।।

रत्नानि वित्त्वा न जनस्य तुष्टिः श्रेयश्च लब्ध्वा कथमस्तु तृप्तिः।
पार्श्वे गुरूणां स्थित एव शिष्यः शिक्षेत तत्त्वं न वचोभिरुक्तम्।।४।।

जीवने यन्मया लब्धं सर्वं गुर्वनुकम्पया।
गुरुभिर्दर्शितः पन्थाः कस्य नो हितसाधकः।।५।।

गुरुरश्मी रवेर्दिव्यो घोरतमोविनाशकः।
निर्झरोऽविरतो गच्छन् बुद्धिप्रक्षालनक्षमः।।६।।

वेदज्ञानस्य सन्मार्गो तैरद्धा मे प्रदर्शितः।
ज्ञानसागरभूतांस्तान् सश्रद्धं प्रणमाम्यहम्।।७।।

विनीतः
**कृष्णलालः**

दिल्ली

३०.१०.२००४

परमश्रद्धेया गुरुवर्याः,

प्रणतिपुरस्सरं निवेदयामि

गुरुकृपा न हि तुल्यत एव भोः
किमपि तत्सममेव न दृश्यते।
फलमिहापि तदाशिषि गुह्यते
समयपक्वमिहाधिगतं मया।।१।।

श्रीमतामाशिषा लब्धो वेदवेदाङ्गसंज्ञितः।
आर्यसमाजमुम्बय्यां सान्ताक्रुजे प्रतिष्ठितः।।२।।

पुरस्कारो महान् ज्ञातो वेदविद्भिश्च कांक्षितः।
चतुर्विंशे दिने तत्र प्राप्तुमासं गतोऽञ्जसा।।३।।

सदाशीर्गुरूणां बभूवाद्य पूर्णा
मनश्च प्रसन्नं महातोषलाभः।
भवन्त्वाशिषो मे सदैवाद्य शीर्षे
समुत्कर्षमुख्याः सदा शोभनास्ताः।।४।।

संस्मृत्य संस्मृत्य कृपा गुरूणाम्
आनन्दरत्नाकरमग्नदेहः।
भूयश्च भूयोऽप्यवनम्य शीर्षं
सद्यः प्रणामाञ्जलिमर्पयामि।।५।।

विनीतः

कृष्णलालः

जयपुर
१.१.२००५

२००५ ई० नववर्ष-कामनाः

सत्यव्रताख्यं सुधियां वरिष्ठं, मा-शारदायाः प्रिय-पुत्ररत्नम्।
दिल्ल्यां वसन्तं सह धर्मपत्न्या, मोमुद्यमानं प्रणमाम्यनल्पम्।। १ ।।

शुभाशिषं नूतन-वर्षकादौ, सम्प्राप्य मोदेऽत्र भवद्-भवत्तः।
चित्रं द्वितीयं प्रहितं तु यत् स्वं, तन्मे प्रहर्षं द्विगुणं तनोति।। २ ।।

बाणाभ्रपूर्णाक्षि-मितोऽचिरं हि, खैस्तः समेष्यन्नववर्ष एषः।
भव्याय भूयाद् भवतः कुटुम्बे, समृद्धिदाता सुखशान्ति-वर्षी।। ३ ।।

स्वास्थ्यं नवाब्दे ह्रसतां क्वचिन्न, भक्तिः परेशेऽविरतं समिन्धाम्।
दीनेषु कारुण्यमथोपकारो, न्यूनौ क्वचिन्मा भवतां कदापि।। ४ ।।

यशः प्रतिष्ठा प्रचुरं च वित्तं, मिलेद् यथेच्छं सकलार्थ-सिद्ध्यै।
मा-शारदा-कोष-समेधनार्थं, सुचिन्तनं चेतसि नित्यमास्ताम्।। ५ ।।

आतङ्कतः स्वं परिरक्षितुं च, बलं प्रभूतं भवतीह भूयात्।
महार्घतातोऽपि च योधनार्थं, करोतु साहाय्यमलं सुलक्ष्मीः।। ६ ।।

स्वस्त्यत्र तत्रापि भवत्कुटुम्बे, वेविद्यतां सर्वविधं सदैव।
न न्यूनताऽऽगच्छतु कार्य-शक्तौ, तिष्ठेन्नवोत्साहबलं स्वचित्ते।।

नारायणः काङ्क्षर एवमार्य, नमोवचोभिर्विनिवेद्य हार्दम्।
अग्रेऽपि लेखार्थमिहाधुनैव, विरामभ्येत्ययि पूज्यवर्य।।

जयपुरम्
७.३.२००५

ॐ

अयि विद्वद्धौरेयाः, पद्मश्री-सत्यव्रत शास्त्रिवराः।
नमोऽत्रभवद्-भवद्भ्यः, सादरमसकृत् पुण्यवद्भ्यः।।१।।

अत्र सूचनाकेन्द्रे, द्वित्र-क्षणमात्रमावयोर्मिलितिः।
स्वल्पाऽपि मधुर-स्मृतौ, संस्थास्यत एव सनातनी।।२।।

किन्तु ततो दिनद्वयेऽस्मन्मातृ-सहितान् भवतोऽर्च्य-चरणान्।
सकुटुम्बः सौत्सुक्यं, द्रष्टुं प्रतीक्ष्यापि विफलोऽस्मि।।३।।

किं मातृस्वास्थ्यमेव, तूर्णमितः प्रस्थान-कारणमभूत्?
अथवाऽन्यः कोऽपि हेतु-रिति जिज्ञासेऽत्याकुलोऽहम्।।४।।

साम्प्रतमत्र कदाऽग्रे, समागमो भविता श्रीपादानाम्?
येन चिर-सञ्चितो मे, सिध्यतु मनोरथोऽचिरमेव।।५।।

प्रत्यक्षमेव भवतां, पाणि-पद्मयोः सबहुमानमार्याः!
चाकाङ्क्ष्ये ऽर्पयितुमहम्, 'उणादि-पदानुक्रम-कोषम्'।।६।।

कुटुम्बोऽपि मम मान्याः!, समर्पणेऽस्मिन् सम्मेलितुकामः।
केनाप्यन्य-कार्येण, प्रतीक्षतेऽत्र भवदागमनम्।।७।।

अग्रे श्रीमन्त एव प्रमाणं, यथाऽऽदेक्ष्यन्ति भवन्तः।
तथैव शिरसि सन्धार्य, विधास्यते मयका सहर्षम्।।८।।

श्रीमात्रङ्घ्र्यब्जयोश्च, वाच्याः प्रणतयोऽस्मदीयाः कृपया।
तदीय स्वास्थ्य-वृत्तं, सूच्यं भवद्भिरार्याः! पुनः।।९।।

इत्यावेद्य सादरं, नामं नाममत्रभवतो भवतः।
श्रीमत्-क्षेम-समीप्सुर्, विरमति नारायणकाङ्करः।।१०।।

जयपुर
१९.५.२००७

श्रीः

श्रीशारदायाः सुतरत्नभूताः, सत्यव्रताख्याः सुधियां वरेण्याः।
समातृकेभ्योऽत्रभवद्-भवद्भ्यः, स्वीया नतीः सादरमर्पयामि।।

चिरात् कृपापत्रमवाप्य चारु, भृशं प्रसादोऽजनि मे कुटुम्बे।
आसन्न-काले भवतः स्वमध्ये, दृष्ट्वैष भूयाद् द्विगुणः प्रसादः।।

श्रीमातृपादानपि सार्धमेव, कुर्युः कृपां दर्शयितुं भवन्तः।
तासां दिदृक्षाऽपि यतोऽत्र सर्वान्, विबाधते नः सततं हि मान्याः!।।

न नूतनं किञ्चिदिहास्ति सूच्यं, राष्ट्रस्मृतेर्मे विषये स्वकीयान्।
विचार-राशींस्तु प्रदातुमाशु, संस्मारयाम्यद्य पुनः पुनर्वः।।

मासैक-पूर्वं भवतां समीपे, 'राष्ट्र-स्मृतिः' सेयमितो मया हि।
सम्प्रेषिताऽऽस्ते, किमति ब्रुवेऽहं? भवद्विचारानिह सम्प्रतीक्षे।।

नमः स्वस्त्यलं ब्रुवेऽहमयि मान्याः! समातृभ्यो भवद्भ्यः।
श्रैमत्क-पत्रवृष्ट्या शुष्क-जीवनं हरितायते।।

सर्वविध-कुशलाकाङ्क्षी
श्रैमत्को विनयावनतः
नारायणकाङ्करः

कालिकाता
१६.१०.२००२

श्रीशारदीयविजयातिथिरद्य धन्या
सर्वैः सुमान्यविबुधैर्जननीव मान्या।
दुर्गाप्रसादसफलीकृतजन्मलग्ना
वर्षान्तरे पुनरहो सुसमागतास्ति।।

अद्येदं भुवनं विभात्यभिनवं दिव्यप्रभोद्भासितं
वस्त्रान्नादिगता गतेव नियता या भवना पार्थिवी।
सर्वे जीवगणाः प्रफुल्लमनसो लीनो विभेदोऽधुना
दूरादेत्य मिथो मिलन्ति मनुजाः स्निग्धैरघोरं जनैः।।

अस्मिन् पुण्यतमे लग्ने विजयानामके शुभे।
श्रद्धासौरभसंयुक्तप्रणामकुसुमाञ्जलिः ।।

सारस्वततपःसिद्ध! सौजन्याम्बुपयोनिधे!
सम्प्र्यते पदाम्भोजे भवतो नम्रचेतसा।।

आशीः कराङ्किता कापि भवतः स्नेहसंयुता।
प्रेष्यतां कृपया येन कृतार्थः स्यादयं जनः।।

देहल्यां विश्वसंस्कृतसम्मेलनावसरे भवतः सान्निध्यलाभेन जनोऽयं कृतकृत्यो जातः, अर्पितवान् च भवतः करकमलयोः स्वरचितं गीतिकाव्यद्वयं भावविलसितमिति शिशुयुवदुर्दैव-विलसितमिति च।

इति
प्रणामनम्रस्य
श्रीसीतानाथ आचार्यशास्त्रिणः

जयपुर
दीपावलिः वि०सं० २०५७

शुभकामना

श्रीः

मान्या महान्तो महनीय-माना, दीपावली-पर्वणि मे नमांसि।
स्वीकर्त्तुमार्याः कृपया भवन्तो, बुधाः प्रसीदन्त्विति प्रार्थयेऽहम्।।

सम्पूज्य लक्ष्मीं धनधान्य-दात्रीम्, आर्याः! भवद्भ्यः सकुटुम्बकेभ्यः।
याचेऽद्य दीपावलि-पर्वणीह, स्वास्थ्यं समृद्धिं च सुदीर्घमायुः।।

महार्घतायामपि भीषणायां, यथाकथञ्चित् सुखदेयमस्तु।
पर्वान्यथानन्दकरं सदैव, बोभोति तेषां धनिका अलं ये।।

गृहं न वस्तुं वसनं न धर्त्तुं, खाद्यं च पेयं सुलभं न येषाम्।
न रोचते पर्व कदापि तेभ्यो, दीपावलेः स्यादुत होलिकायाः।
प्रशासका हन्त! ममाद्य राष्ट्रे, सद्वृत्तमुल्लङ्घ्य दुराचरन्ति।
तदेव कुर्वन्ति च चिन्तयन्ति, सिध्येद् यथेष्टं तु तदीयमेव।।

न लोक-कल्याणमभीष्टमेषां, स्वस्यैव कल्याण-कृतौ रतानाम्।
अमूल्यमेभ्यः स्वमतं प्रदाय, पश्चात्तपन्ती जनताऽद्य तुन्ना।।

निर्वान्त्वये! मर्त्तिक-दीपकाः परम्, आशा-प्रदीपो ज्वलितोऽस्तु सर्वदा।
इमं हि यस्मादवलोक्य लिप्सुकः, सर्वोऽपि लोकश्चिरमत्र जीवति।।

स्वास्थ्यं शरीरे मनसि प्रसादो गृहे समृद्धिः सुख-शान्ति युक्ता।
भक्तिः परेशे विपुलं यशश्च भूयाद् भवद्भ्योऽत्रभवद्भ्य आशु।।

इति स्वाशयं निवेद्य

तत्रभवत्सु भवत्सु सम्मान्येषु

कृपाकाङ्क्षी विनीतो

*विरमति*

नारायण काङ्करः

दिल्ली

२९.१०.२००१

**परमश्रद्धेया गुरुवर्याः**

प्रणतिपुरस्सरं निवेद्यते।

पठित्वा वृत्तपत्रेषु विदेशे भवतां श्रुतिम्।
सम्मानाढ्यां परामोदं प्राप्तवानस्म्यहं शुभम्।।

कीर्तिश्चकास्ति सर्वत्र वैदुष्येण शुभा सदा।
वर्धापयामि दूरस्थः शब्दैस्तु प्रमिताक्षरैः।।

सुसम्मानितमात्मानं भवत्कीर्त्या मुदा हृदा।
भवद्गौरवमस्माकं मन्येऽहं गौरवं शुभम्।।

भवतां प्रियस्य शिष्यस्य

**कृष्णलालस्य**

२०६० वि० सं०

श्रीः

दीपावली-पर्वणि पूज्यपादाः! नौम्याशिषो वः समवाप्तुकामः।
श्रैमत्कमप्यत्र प्रकामयेऽहं, सदैव शं सर्वविधं कुटुम्बे।।

अज्ञान-घोरान्ध-तमो जनानां, निलीय गूढं हृदये स्थितं हि।
व्युच्छिद्य दीपावलिरद्य नैजं, प्रभावमोजः प्रकटीकरोतु।।

अज्ञानमेवाऽखिल-दुःख-हेतुर्, नाशं विना तस्य कथं सुखाप्तिः?
हा हन्त! जानन्नपि सर्वमेतत्, तत् कोऽपि न ध्वंसयतीह मर्त्यः।।

अज्ञान-मोहा-वृत-चित्त-लोकः, स्वार्थातिरिक्तं नहि वेत्ति किञ्चित्।
स्वार्थी परार्थं परिबाधमान, आतङ्कितं कं कुरुते न कुत्र?
अशान्त-चेता व्यथितः स्वयं हि, कुचेष्टितैः स्वैस्तुदते परांश्च।
अन्योन्यमेवं परिबाधमानो, व्यधान्न हा! स्वर्नरकं किमत्र?

चेन्नारकीयः सुखमालभेत, तर्ह्येष मर्त्योऽपि पर-प्रपीडी।
परन्तु नैत् क्वचिदस्ति भावि, पर-प्रपीडीह सुखी न कोऽपि।।

तव प्रसादं परिलभ्य ये हि, जनाः प्रमत्ताः पर-पीडकाश्च।
हे लक्ष्मि मातः! स्वजनानमूंस्त्वं, सुबुद्धिकांश्चापि कुरुष्व सार्धम्।।

विवेक-हीना धनवन्त एते, भवन्ति सद्भ्यो ह्यभिशाप-रूपाः।
एषां कुचेष्टैव कदा न कं कं, तोतुद्यते चापि करोत्यशान्तिम्।।

महार्घताया अति भीषणायाः सुदुःसहेऽस्मिन् विकराल-काले।
लक्ष्मीश्वरीकर्तु तथा दयां स्वां, यथा सुजीव्येत विनाऽन्तरायम्।।

विना धनं कोऽपि महोत्सवोऽत्र, न रोचते क्वापि कदापि कस्मै।
महोत्सवाः सन्ति तदर्थमेव, ये सन्ति लक्ष्मी-कृपया धनाढ्याः।।

यथानुभूतं मयका तथैव, निवेदितं नैव निगूहितं च।
निवेदनाल्लाघवमात्मनीहे, मम्मन्यते किञ्चन मान्यवर्याः!।।

युग्मकम्

इति सुमेरु कर्णमार्ग, रामगञ्ज–धान्यमण्डी–जयपुरे।
विद्या–वैभव–भवने, वासकारी वाणी–कृपणः।।

तत्रभवतो भवतोऽपि, पूज्याः! प्रणमन् सपरिवारानहम्।
स्ववाचमुपसंहरामि नारायणकाङ्करः ।।

---

यन्मया लिखितं पूर्वं अनुरोधविधायुतम्।
तद्विस्मर्यतां भवता, भवेद्भाव्यं यतस्ततः।।१।।

अधुनोपस्थितो दीपावल्युत्साहमहोत्सवः।
तमःप्रभेदी चानन्ददीपकान्तिसवैभवः।।२।।

यो नरकासुरारातिसंज्ञालसितग्रहः।
श्रीकृष्णः सत्यभामा समेतो हितकरोऽवतु।।३।।

वैदर्भ्याः सपत्नी सा सत्यभामाऽऽन्भ्रभामिनी।
विश्रुतेऽति स्थितस्तस्याः प्रेमोद्धारकरो हरिः।।४।।

तदुद्धारकथा बाल्ये मम प्रीतिकरी भृशम्।
मातृभाषागृहीता च रम्यनाटकरूपिणी।।५।।

आनन्दवर्धनी साऽभूत्, किन्तु सत्यैकसंभृता।
सन्मतिः केशवस्याऽसीत् नरकासुरवधानुगा।।६।।

साफल्यं दिशतादस्माकं दांपत्यं तयोर्भुवि।
प्रसन्नं प्रार्थनादायि भूयो भूयः सुखोद्वहम्।।७।।

आश्वेते लिखिताः श्लोकाः छन्दोबद्धाः बुधोत्तम।
दिशन्ति मच्चेतसे ते शुभवेलोन्मीलितं शमम्।।८।।

चिन्तगुण्टसूर्यनारायणः

भोपाल
१२.१२.२००४

आदरणीयाः डा० महाभागाः

सादरं सप्रेम नमो नमः।

पत्रं प्राप्य कृतज्ञोऽस्मि विद्यते मम कामना।
शतायुषो भवन्तः स्युः स्वास्थ्यं भवतु सौख्यदम्।। १।।

वाण्यर्चाव्यापृताः शश्वद् भृशं यान्तु यशस्विताम्।
सुकृतिनो भवन्तो हि कीर्त्तिदा कृतिसम्पदा।। २।।

मत्कृतेर्विषये भावा भवद्व्यक्ताः समीक्षणे।
नो सन्ति केवलं भावाः शुभाशंसावचांसि वः।। ३।।

भवभूतिं स्मराम्यत्र स्वकीये येन नाटके।
प्रोक्तानि यानि वाक्यानि भजन्ते तानि नित्यताम्।। ४।।

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति।। ५।।

नववर्षकृते मङ्गलकामनाभिः साकम्
सप्रश्रयम्
रामकृष्ण सराफः

आनन्दो विपणी प्रसादकणिका निर्माल्यकैवल्यदा
व्यूहे भोगपुरीसमाश्रिततनुर्नीलाचले राजिता।
रूपारूपगुणागुणैश्च कलिता मूर्त्तिश्चतुर्धा हिते
वह्निव्योमस्वबाहुकालसकला पायादपायाज्जगत्।

श्रीगोपालकृष्णदाशः

जयपुर

दीपावलिः वि. सं. २०६२

दीपावली-पर्वणि पूज्यपादाः! शुभाशिषो लिप्सुरहं भवद्भ्यः।
अलं नमः स्वस्ति च सादरं भोः! ब्रवीमि भद्रं भवदीयमिच्छन्।।१।।

हृदि स्थितं घोर-तमो जनानां, व्युच्छिद्य लक्ष्मीर्वितरेत् स्वकीयम्।
ज्ञान-प्रकाशं सुख-शान्ति-मूलं, सम्प्रार्थये तामिति सर्वदैव।।२।।

अत्रानिष्टस्वार्थपरा अमी हा!, मिथस्तुदन्तोऽपि निजेष्टमत्र।
नैवाप्नुवन्तः समयात्तु पूर्वं, त्यजन्ति संसारमिमं वराकाः।।३।।

न स्वस्य नान्यस्य च जीवनस्य, विजानते मूल्यममी विमूढाः।
स्वयं म्रियन्तेऽथ च मारयन्ति, लक्ष्मीः सुबुद्धिं वितरेदमीभ्यः।।४।।

येष्वस्ति भारो जनतां सुकार्ये, निन्यं नियोक्तुं बहु दुःखमस्ति।
प्रशासकास्तेऽपि कुमार्गगाः स्वयं, वहन्ति दायित्वमरे! न किञ्चित्।।५।।

निरङ्कुशत्वं प्रसृतं जगत्यां, स्वातन्त्र्यमेवात्र निगद्यतेऽद्य।
तदेव संहारकरं समेषां, सञ्जातमेतत् कथयामि सत्यम्।।६।।

सत्यस्य कालः परमस्ति नाद्य, सत्यं विलुप्तं बहु-पूर्वमेव।
सत्याध्वनीनः सुखमेधते न, जाता जनानां दृढ-धारणेयम्।।७।।

सत्यव्रतः शास्त्रिवरो भवादृक्, सौम्यः सुशीलो नहि दृश्यतेऽन्यः।
असत्य-राज्ये कथमद्य जीव्यं? चिन्तेति चित्तं मम तोतुदीति।।८।।

किं चिन्तया सेत्स्यति मेऽनयाऽद्य? सत्यव्रतः कोऽपि भवादृगेवं।
वतीर्य रक्षेत् सबलो जनश्चेद्, यथाकथं जीवितुमत्र शक्यम्।।९।।

लक्ष्मीर्विदध्यात् स्वदयामियं चेच्छुभं समेषामिह सम्भवेद्धि।
तामेव तस्माद् बहुशः प्रणम्य, सम्प्रार्थयेऽहं सततं विनम्रः।।१०।।

भवत्कुटुम्बेऽपि समृद्धिरास्तां,
स्वास्थ्यं च भूयाच्च सुदीर्घमायुः।
यच्चाप्यभीष्टं कृपयाऽत्र लक्ष्म्याः,
सद्योऽखिलं तद् मिलतां भवद्भ्यः।। ११।।

भक्तिः स्वधर्मे परमेश्वरेऽथ, परोपकारे रतिरस्तु नित्यम्।
चित्ते प्रसादश्च मुखे स्मितत्वं, क्रोधस्य लोपोऽपि सदैव भूयात्।। १२।।

सर्वत्र प्रेम-व्यवहार-भाव, आत्मीयता सर्वजनेषु भूयात्।
वञ्च्येत नामं स्वयमेव किन्तु, स्वप्नेऽपि वञ्च्येत कदापि नान्यः।। १३।।

द्वेषादि-दुर्भाव-कृते कदापि, स्थानं न चित्तेऽस्त्विह किञ्चनापि।
सुस्निग्ध-दृष्टिः करुणार्द्र-चित्तं, सर्वत्र नित्यं सुख-शान्तयेऽस्तु।। १४।।

श्रीराम-राम-प्रभविष्णु-नाम, जिह्वाग्र-वर्त्यस्तु प्रतिक्षणं हि।
भुक्तेश्च मुक्तेर्यत एतदेव, सर्वोत्तमं साधनमस्ति नित्यम्।। १५।।

इत्येव याचन् भवदर्थमद्य, लक्ष्मीं पराम्बां सकलेष्ट-दात्रीम्।
भूयोऽपि पूज्याः! भवतः सभार्यान्, अनारतं नौमि स-मानमेव।। १६।।

सुमेरुकर्णाध्वनि रामगञ्जे, निवासकारी जयपत्तनेऽहम्।
नारायणः काङ्कर एवमेव, शुभाशिषं वश्मि सदा भवत्तः।। १७।।

अलवर

२२.११.२००६

श्री हरिः

तत्रभवतां समादरणीयाणां ऋषिकल्पानां विद्वद्वरेण्यानां श्री शास्त्रिवर्याणां करकमलयोः

सादरं सविनयञ्च
समर्प्यते

"साहित्याम्बुधिमन्थने सुनिपुणाः
काव्यप्रभाभासिताः
व्याख्याने सुविचक्षणाः सुकृतिनः
गीर्वाणवाणीविदः।

दिल्लीस्थाः सुधियः सुगौरवयुताः
नाम्ना च सत्यव्रताः।
शोभन्ते सुकृतैकशास्त्ररसिकाः
श्रीशास्त्रिवर्याः सदा।।

भवन्निष्ठः
श्याम शर्मा वसिष्ठः

अलवरतः
२२.१.२००७

श्रीः।।

परमादरणीयेषु शास्त्रिवर्येषु सादरं सप्रश्रयञ्च प्रणम्यते;

सुललितभावैर्भरितं
पत्रं मनोऽभिरामं समासाद्य।
परमानन्द-द्रवितं
भ्रमरीभूतञ्च मे चित्तम्।।

समाचारः प्राप्तः समुदितयशोभिर्विलसितः
समग्रो वृत्तान्तः झटिति पठितः स्नेहिलदृशा।
शुभं वै तन्वाना निखिलगरिमा या विकिरिता,
महान्तः धन्याः वै जगति विरलाः त्वच्च सदृशाः।।

यदा भवन्तोऽत्र समाग आसं-
स्तदा व्यवस्था सुविहिता यदि स्यात्।
सर्वाश्च पूर्णाः हृदि कामनाः स्युः
समीहितं स्यात् सफलञ्च सर्वम्।।

सम्प्रति पठन-पाठनविषयिकी तत्रभवतश्चिन्ता स्वाभाविकी खलु।
अहन्तु मन्ये

भवादृशाश्चेद् विबुधेषु सम्यक्
ज्ञानस्य चर्चाः विनियोजयेयुः।
प्रलेखनं स्यात् बहु विस्तरेण
ज्ञानस्य रक्षा भविता तदा वै।।

कालस्तु धावत्यतितीव्रगत्या
लोकोऽस्ति कालानुगतिर्बलीयः।
धनं पदार्थं बहु मन्यमानः
ज्ञाने च ध्यानं नहि दीयते वै।।

तत्रभवद्भिस्तु स्वकीये पावनतमे जीवने यत् विहितमस्ति भविष्यति तावच्च कर्तुं न कोऽपि सक्षमः दृश्यते।

श्रीमद्भिस्तु

ज्ञानार्जनं प्रौढतमं विधाय
ज्ञानप्रदानेन यशश्च लब्धम्।
साहित्यसौन्दर्यविकीरितं यैः
भवादृशास्ते विरलाश्च सन्ति।

अहन्तु दीनः युगबोधशून्यः
भवांस्तु दिव्योऽ तितरां सुकीर्तिः।
किं वच्मि तत्त्वत् विषयेऽकिञ्चनः
गातुं प्रमातुं नहि शक्तिरस्ति।।

अस्तु, भवतः पत्रन्तु बहुपूर्वमेवाधिगतमासीत्, परं पारिवारिककारणादेव बहिर्गतोऽहमलवरतः। अतश्च नहि प्रत्युत्तरितम्।

अन्यत् सर्वं सामान्यमेव। भवतां वदान्यतानिर्भराम् आशुतोषकल्पां कृपां कामयमानोऽहम्।

श्यामशर्मा वाशिष्ठः

दिल्लीतः
१८.६.२००७

ओ३म्

**परमश्रद्धेया आचार्यवर्याः**

प्रणतिपुरस्सरं निवेदयामि

सप्तसप्ततिवर्षेषु,
पूर्णेषु भवदायुषः।
चकास्तु नाम सर्वत्र
निखिलभुवि मानितम्।।१।।

प्रेरयन्तु सदा शिष्यान्
उत्कृष्टकर्मणे मुदा
शतायुषश्च भूयासुः
स्वस्थाःसुमनसः सदा।।२।।

आसन् दिनानि पूर्वाणि
सुमधुराणि तानि वै।
अभूवं भवच्छिष्यो
महाविद्यालये तदा।।३।।

न त्वरितगतिः कालो
रोद्धुं केनापि शक्यते।
गच्छत्यसौ स्वयं गत्या
वयं सर्वे तु दर्शकाः।।४।।

एकः कालस्य नेतास्ति
स पूर्वजन्मनः फलम्।
व्यवस्यति स्वयं दातुं
मानवस्तेन बध्यते।।५।।

विनीतः

कृष्णलालः

जयपुरम्
२१.२.२००७
२०६४ विक्रमवर्षकृते शुभाशंसाः

श्रीशः पातु सदैव हि

पद्मश्री–समलङ्कृत–राष्ट्रपति–सम्मानित–मनीषिभ्यः।
नमः स्वस्त्यलं सभार्य–सत्यव्रतशास्त्रि–पादेभ्यः।। १।।

अयि भवदीयमसीमं, ससौजन्यमौदार्यं किं वदानि?
यद् भवन्तः सभार्या, एत्यात्र मां प्रपूतवन्तः।। २।।

तद्–दिनं तु कदापि नहि, विस्मरिष्यते मान्याः! जीवने।
यदा भवद्भिः स्वीकृत, 'उणादिपदानुक्रम–कोषः'।। ३।।

सहैव श्रीमातरं, चाप्यभिवन्दितुमभिनन्दितुं चात्र।
मिलितो यो हि सुसमयः, स्मर्त्तव्य एव जातः सोऽपि।। ४।।

तदा गृहीत–चित्राणि, द्वादश प्रहिणोमि भवद्भ्यः स्मृत्यै।
प्राप्तिरेषां तु सूच्या, पत्रेण दूरभाषेण वा मेऽत्र।। ५।।

एभ्यो मध्ये पत्रं, प्राप्तमासीदेकं मया भवताम्।
परन्तु नैतानि तदा, सम्मान्याः! सज्जितान्यासन्।। ६।।

चित्र–निर्मितौ विलम्ब, इहाजनि यो मान्या! अनपेक्षितः।
क्षमां याचे तु तस्मै ह्रीणः स्वयमेव भूरि भूरि।। ७।।

मातृभ्यो भवद्भ्यो, नमो मे सकुटुम्बस्य पुनः पुनः।
अग्रेऽप्येवं भवतां, कृपा–कणिकां लिप्से सततम्।। ८।।

सकृद् घटित–सम्बन्धं, न कदापि विच्छिन्दन्ति मनीषिणः।
श्रुतमिदं मयकाऽसकृत्, कर्त्तारो न मृषा भवन्तः।। ९।।

पुनश्च मम कुटुम्बोऽत्र, स्मारं स्मारं भवन्तौ दम्पती।
जयपुरागमनेऽग्रेऽपि, दिदृक्षते सौत्सुक्यं नमन्।।१०।।

चतुःषष्ट्युत्तरविंश-वैक्रम-वर्षो नूतन आगामी।
बोभोतु भवद्भ्य आर्या, वर्याः! सर्वथा निजेष्टदः।।११।।

महार्घता-सुरसां द्राग् विहन्तु कश्चन हनुमानवतीर्य।
येन जीवनं स्यादिदं सरलं सरसं सुधोपमं च।।१२।।

आतङ्क-दशकण्ठमपि, कश्चिद् दाशरथिरवतीर्य निहन्तु।
येन विचरतु निर्भयः, सर्वोऽप्याबाल-वृद्ध-जनः।।१३।।

भ्रष्टाचारं तु नन्द-तुल्यं निहन्तु कश्चन चाणक्यः।
येन विशुद्धे पर्यावरणे सुजीवितुं शक्येत।।१४।।

मन-इच्छास्तु ममैताः, सन्ति मान्याः! पूरयितुमिमा अहम्।
निवेदये जगदीशं दयालुं शरण्यं सर्वदा।।१५।।

प्रार्थनैवैकमात्रं, वित्तं मेऽस्ति मान्या! महतो महत्।
तदेव साम्प्रतमस्मै, जगदीशायाहमर्पयामि।।१६।।

तुष्ट एतेनैष मे, जगदीशः पिपर्त्तु मनःकामनाम्।
सेयमेव मे वाञ्छा, नान्येति जानन्तु भवन्तः।।१७।।

प्रार्थनामात्रमेकं, कर्म कृष्णः कथितवानस्माकम्।
तत्-फलं तु न्यषेधीद्, अतः परमहं करवाणि किम्?।।१८।।

प्रार्थनातिरिक्तमहं, किं कर्त्तुं शक्नोमि, वदन्तु बुधाः।
प्रार्थनां स्वीकुरुते स, न वेत्यग्रे द्रष्टव्यमस्ति।।१९।।

आशा तु करणीयैव, यतो हि सैव जीवितुं परमं बलम्।
कृच्छ्र-गतोऽप्याशावान्, सन्तरति महाकृच्छ्र-समयम्।।२०।।

किमहं बहु निवेदयै, विदित-वेदितव्येषु भवत्स्वधुना?
अतो विरमामीहैव, प्रणमन् नारायणकाङ्करः।।२१।।

दिल्लीत:
१५.१०.२००७

परमश्रद्धेया गुरुवर्या:

प्रणतिपुरस्सरं निवेदयामि

अधिगम्य शुभं पत्रं चिरप्रतीक्षितं तथा।
उदन्तं भवतां ज्ञात्वा सन्तोषमाप्तवानहम्।। १।।

चलति पूर्णसप्ताहं ज्वरोऽतीव सदु:खद:।
वायौ जीवाणव: कुर्यु: तमज्ञाता: प्रसारिता:।। २।।

कासस्तस्योपसर्गोऽस्ति प्रतिश्यायो भयङ्कर:।
भवत: साम्प्रतं मन्ये स्वस्थान् काले गते बुधान्।। ३।।

वार्धक्ये क्षीणतां याति स्वल्पकार्यक्षम: पुन:।
इच्छन्नपि न शक्तोऽयं देहो दुर्बलतां गत:।।४।।

येन पादयुगेनैव पूर्वं गिरिस्तु लङ्घित:।
तेन सम्प्रत्यशक्तोऽहं न सम्यक् चलितुं क्षम:।।५।।

न खलु बहिरुपाधीन् प्रीतय: संश्रयन्ते
व्यतिषजति पदार्थानान्तर:कोऽपि हेतु:।
मम खलु भवतां च स्नेहबन्धोऽस्ति तादृग्
विगतजननमध्येऽप्यावयो: सङ्ग आसीत्।। ६।।

गुरुवरकृपयाहं प्रोन्नत: सर्वदासं
स्थित इव जलतीरे ज्ञानलुब्धो जन: स्यात्।
जलनिधिमहिमासौ येन शीतैस्तटस्थान्
स्नपयति जनवृन्दान् सीकरैरात्मगत्या।। ७।।

अपि च बहुमणीन् शुक्तीः सुरम्यांश्च शङ्खान्
विकिरति तटभूमौ मादृशानां हि तृप्त्यै।
कविगुरुकृतयो मां शिक्षयामासुरत्र
विविधसमयमध्ये या गुरुस्नेहदत्ताः।।८।।

श्रद्धावनतः
कृष्णलालः

वि०सं० २०६३

दीपावली-पर्व-निमित्तमद्य, नमांसि भूयांसि भवद्भ्य आर्याः।
स्वस्ति ब्रुवेऽथापि च शं समीहे, देहेन सार्धं मनसे सदाऽलम्।।

स्वास्थ्यं विना यन्न विभाति किञ्चिद्, निःसीम-लक्ष्मी-विभवं यशश्च।
तदेव धन्वन्तरिरार्यवर्या!, दद्याद् भवद्भ्योऽत्रभवद्भ्य इष्टम्।।

प्रज्ञापराधात् प्रभवन्ति रोगाः शारीरिका मानसिकाश्च सर्वे।
प्रज्ञापराधान् न यथा विदध्मो, दद्यात् तथा नः सुमतिं गणेशः।।

कामादिका आन्तर-शत्रवोऽपि, यथाऽत्र नास्मान् परिपीडयन्तु।
तथा बलिष्ठाञ्जित-कामदेवः, कुर्यात् सदा नः कृपया महेशः।।

मृत्तैल-दीपोत्सव एकरात्रो, वर्षे सकृद् मोदयतात् कियान् नः?।
ज्ञान-प्रदीप्तं तु मनः सदैव, वाञ्छामि मान्या! जगतोऽखिलस्य।।

अयि परम-श्रद्धेया, डॉक्टर-श्री सत्यव्रतशास्त्रिणः!
भवतां कुशलं वाञ्छन्, पुनरपि प्रणौम्यसकृद् भवतः।।

अहमस्मि सुमेरुकर्ण-मार्ग रामगञ्ज-जयपुर-निवासी।
भवदीयाशीर्लिप्सुः, कश्चन नारायणकाङ्करः।।

---

सत्यव्रतः संस्कृतसागरोऽयं,
सम्भाषतेऽद्यापि च काव्यवृक्षः।
ग्रन्थास्तु शाखाः ननु पर्णपद्या-
न्येवं विभातीव नु कल्पवृक्षः।।

यतीन्द्र कुमार शर्मा

हैदराबादतः

[तिथिनिर्देशोऽत्र नास्ति]

मम स्वाध्यायप्रवृत्तिविवरणपत्रम्

वामलूरुतनयामृतं गिराम्
कालिदासपदसारसौरभम्।
शङ्करार्यभृतवाङ्मयप्रभा
संभवंतु मम जन्मजन्मनि।। १ ।।

पोतनार्यकृतिपूतलेखिनी
वैखरीविततमातृभाषित-
श्रीपदाञ्चितसुभक्तिरञ्जिता
धन्यताऽस्तु मम जन्मजन्मनि।। २ ।।

"षेक्स्पिय"र्मृदुतरार्द्रता हृदः
मानवत्वधनमान्यता लसत्-
स्फूर्तिदा भवतु मूर्तिमत्तया
साऽद्य मे दिशतु जन्मजन्मनि।। ३ ।।

सानैटुन्नमितमानसांतरे
बंभ्रमीति मम चञ्चरीकवत्।
भूष्णु शेक्स्पियर्वदनतोरणम्
चाद्वितीयसद्भक्तिदर्पणम्।। ४ ।।

एतदद्यतनकर्मचोदनं
काव्यशिल्परतजीविनो मम।

प्राग्यथाऽभवदुदारभक्तिम-

द्वङ्गभारतिरवीन्द्रधोरणी।।५।।

वासुदेवचरितासवामल-

प्रोद्यदुज्ज्वलघटायितं च मे।

काव्यमर्धघटितं च सांप्रतम्

रुक्मणीपरिणयाभिशोभितम्।।६।।

वैनतेयकृतवेगसंवृतो

यानि कालरथक्रनेमिर-

प्यत्रचक्रविचरिष्णुरस्म्यहं,

मादृशां भवतु केवलं नमः।।७।।

श्रीपदार्चने योग्यतावहं

श्लोकनिर्मितं नाम भासितम्।

काव्यमस्त्ययुतरूपधायिकं

मातुरस्तु तत् प्रीतिदायकम्।।८।।

सूर्यसन्नुतिः कोमला शत-

श्लोकवर्तिनी भक्तिवर्धिनी।

मामकीनगलसंभृता भवेत्

श्रेयसां ततेः साधु साधनम्।।९।।

एतद्द्वयीनव्य[*]कवित्वधारा

धुरीणतेड्या धरते समाप्तिम्।

अपेक्षते मुद्रणलाभमेवं

व्रजेन्न रोधं मम तीर्थयात्रा।।१०।।

यावद् भवेन्मे जगतोऽनुषङ्गः

तावद्भवेन्मे भगवान् सहायः।

यावद् भवेन्मे भगवान् सहायः
तावद्भवेन्मे कविताऽनुषङ्गः।।११।।

चिन्तगुण्टसूर्यनारायणः

विवरणम्

१. वामलूरुतनयः = वाल्मीकिः।
२. कृती =पुण्यवान्।
३. ने इत्यत्र ह्रस्वाक्षरमुच्यताम्।
४. ललितासहस्रनामस्तोत्रं पुरातनमस्ति। तथैव मयूरमहाकवेः सूर्यशतकम्। मम श्रीमातृसहस्रं च सूर्यस्तोत्रं च प्रत्यग्रकाव्यद्वयं भवतः। एते द्वे काव्ये मम स्वीयरचने, नत्वनुवादकाव्ये इति विज्ञप्तिः।।

मुम्बापुरीतः

[तिथिनिर्देशोऽत्र नास्ति]

**श्रीमत्सत्यव्रतशास्त्रिमहोदयानामभिवादशतम्**

चिरकालाल्लिखाम्यद्य संतोषो जायते बहु।
भवादृशसुहृत्सु प्रयुक्ता मे गीर्विशिष्यते।।
ममोद्यमाश्रयाणां त्रि-भाषाणां संस्कृतस्य वै।
प्राधान्य, मत्र नद्धायाः पट्टिकाया इदं स्फुटम्।।

तावद्गानामृतं भाति मणिवद्गण्यमेव तत्
भवत्स्वन्येषु काव्येषु मत्कृतेषूदितं दृशाम्।।
पथं संप्राप्तमेतावत्, पठितं भवताऽपि यत्।
तदस्ति प्रथमं कर्णरसायनमिवोत्थितम्।।

जनकस्तनयप्राप्त्या लभेतानन्दमेव तत्-
प्रशस्तिश्रवणात् किन्तु न प्रसूत्या तथाविधम्।।
अत एव भवादृशपाण्डितीलस-
द्विभवानामुरुमण्डनोचितप्रभा।।

कलितानां सुहृदामपेक्षमाणः सन्
विहराम्यहमत्र सहायताधनः।
निधयो बहवोऽप्येवमस्तोकं न्यासवस्तु च।
पुरस्कारप्रदानार्थं पात्रनिर्णेतृताभृतः।।

भवादृशा भवन्त्येव न्यासपालसहायकाः।
प्रतिपादनसमुत्साहा, वा तिष्ठन्ति सभामुखे।।

तस्मादहं न विस्मार्यः; विज्ञप्तिः व्याहृता मया।
वर्षीयान् दूरसंस्थोऽहं; इयता चैव तृप्तिभाक्।।

भगवत्याः कृपा मेऽस्ति जानाम्येषा च मानुषीं
तनुमाश्रित्य वर्तेत तत्कृपाऽपीति मे मतिः।।

यथा तथा भवत्वेव, प्रत्ययो मेऽस्ति, मामकम्
आलम्ब्य करमेवानुक्षणं नयति मामिति।।

भवत्स्वपि दयादृष्टिं पातयेज्जननी शुभा।
अनिमेषस्वभावं सा साहाय्यं वितनोतु च।।

एवं बुधजनविधेयः

चिन्तगुण्टसूर्यनारायणः

जयपुर
१७.१२.२००७

।। श्रीशः पातु।।

सत्यव्रतं शास्त्रि-वरं विपश्चितं, सरस्वती-पुत्रमनुत्तमं प्रियम्।
दिल्ल्यां वसन्तं कृति-रत्न-कारकं, मुहुर्मुहुर्नौमि स-मानमार्यकम्।।

यदापि यो जैपुरमैति कोविद, स्तदाऽनुगृह्णाति पुनाति मां च सः।
दृष्ट्वैव तं मे स्वत एव मस्तकं, तत्पादयोराशु नतं प्रजायते।।

पत्न्या सहोपस्थित एष मे तदा, नारायणः श्री-सहितः प्रतीयते।
एतद्-द्वयोः पाद-सरोज-युग्मके, मनश्चरीकर्त्ति च मे विलुण्ठितुम्।।

महाविभूत्योरनयोश्च सङ्गं, कुटुम्बिनश्चापि ममात्र लब्ध्वा।
भवन्ति हर्षामृत-सिक्त-चित्ता, एवं हि वक्तुं नहि सङ्कुचामि।।

अहो! कृतं किं सुकृतं मया पुरा, यद्दम्पती इत्थमिमौ महाशयौ।
स्व-स्नेह-वृष्ट्या सकुटुम्बमत्र मां, कृत्वाऽभिषिक्तं कुरुतो मुदाऽऽप्लुतम्।।

दाम्पत्यमेतत् सुधियोरनुत्तमम्, आदर्शभूतं जगतीह वर्तते।
एतौ यतो राष्ट्रपतिर्महाशयः, सम्मानितौ वै कृतवान् विचक्षणः।।

दाम्पत्यमेतादृशमस्त्यलभ्यं, सम्मानितं राष्ट्रपतिर्व्यधाद् यत्।
आदर्शमेतत् कथयामि तस्मात्, सदाऽभिनन्द्यं सकलैश्च वन्द्यम्।।

पिताऽपि मे श्रीनवलः किशोरः, सम्मानमस्मै बहु यच्छति स्म।
न्यूनः स न स्यान्मम पाणिनेति, याचे गिरीशं गिरिजां च शश्वत्।।

एतेन यैतौ प्रति मेऽत्र काचिच्-श्रद्धा जनिं लब्धवती प्रभूता।
तयैव सार्धं स्वमनोज-भावैः, पुष्पैरिमौ सम्प्रति पूजयामि।।

सन्तुष्यतां द्वावपि दम्पती इमौ, सामान्ययाऽपीह वचोऽर्चयाऽनया।
दया-दृशं स्वां दधतौ सदा मयि, सारोग्यमायुश्शतमत्र विन्दताम्।।

उभावपीमौ मयि दम्पती सदा, दया-दृशं स्वामनिशं सुरक्षताम्।
आरोग्यमाभ्यां च सुदीर्घ-जीवनं, दत्तां गिरीशो गिरिजा च दम्पती।।

दिने दिने विवर्धतां, यशोधनमनयोः प्रणम्य-दम्पत्योः।
येनाहमपि सकुटुम्ब, आप्नवानि परमं प्रमोदम्।।

इत्येव याचेऽनिशमन्तरात्मना, भवं भवानीं नत-मस्तकाञ्जलिः।
सद्भाव-पुष्पैः शुभ-दम्पती इमौ, भूयोऽपि भक्त्या परिपूजयामि च।।

## युग्मकम्

सुमेरुकर्ण-मार्गेऽत्र, रामगञ्ज-धान्यमण्ड्यां जयपुरे।
विद्या-वैभव-भवने, वासकारी कश्चनैषकः।।

श्रीशास्त्रि-दम्पतिभ्यां, विद्या-वैभव-लसिताभ्यामाभ्याम्।
स्वार्चामेवं समर्प्य, विरमति नारायणकाङ्करः।।

वि०सं० २०६४

## दीपावलि-मङ्गलकामना

अयि सुधी-शिरोमणयो, नमः समातृभ्यो भवद्भ्यो नमः।
लक्ष्मी-मातुः कृपया, स्वेप्सितं सर्वं सुलभमस्तु।।

दीपमालिका भूयात्, सुकुटुम्बाय भवते मङ्गलमयी।
वितरतु लक्ष्मी-माता, मुक्तहस्तं स्वेप्सितमखिलम्।।

धर्मार्थ-काम-मोक्षा, यद् विना न सिद्ध्येयुरिह कदापि।
तदेव वितरतु लक्ष्मीः, स्वस्थं सुदीर्घायुर्भवते।।

पुनः स्व-हार्दमपीदं, प्रस्तोतुमधः सहृदयवरे भवति।
लोभ-संवरणेऽक्षमः, क्षमां याचेऽहमार्य बुधवर!।।

बाह्य-तम आंशिकमेव, मृत्-तैल-विद्युद्-दीपा निघ्नन्ति।
परं ज्ञान-दीप एष, सबाह्यमान्तर-तमो निहन्ति।।

ज्ञान-दीपोपलब्धौ, द्रव्य-व्ययोऽपि न करणीयो भवेत्।
परमन्य-दीपा द्रव्य-, व्ययं विना नोपलब्धाः स्युः।।

अन्य-दीपाः प्रकाशं, सदा वितरन्ति न जनेभ्यः कदापि।
परन्तु ज्ञान-दीपो, वितरति प्रकाशं नित्यमेव।।

निर्वान्त्यन्ये दीपा, ज्ञान-दीपो न च निर्वाति कदापि।
ज्ञान-दीपो यस्यैष, तमो-दोषः पीडयति तं न।।

ज्ञान-दीपमिमं सर्व, आप्नोतु मातृ-लक्ष्मी-प्रसादतः।
येन मिथोऽज्ञान-तमो, बाधतां नैव कदापि कमपि।।

अज्ञान-तम-आवृता, एव मिथो युध्यन्ते स्वार्थ-कृते।
स्वार्थ एवास्ति सर्वा,-नर्थानां जनकः सर्वदा।।

निज-देश-विद्रोहिता, स्वसंस्कृत्याचार-विचार-हानिः।
स्ववेश-भूषा-भाषा-, त्यागः सर्वः स्वार्थ-जातः।।

स्त्रीणामपहृतिस्तासु, बलात्कृतिः पुनस्तासां हत्याऽपि।
गर्भ एव कन्या-वध, इत्यादि-दोषाः स्वार्थजा हि।।

आतङ्कवाद-प्रसार,- पर्यावरण-प्रदूषणयोर्जनकः।
सैष स्वार्थ एवास्ति, निखिल-विश्व-मानितो हेतुः।।

समाज-देश-राष्ट्र-, विश्वेषु प्रशास्ति स्वार्थ एवाद्य।
अत एव नानामुखो, भ्रष्टाचारो व्यथयति कं न?।।

संस्कृताधृत-शिक्षैव, स्वार्थ-नाशक-ज्ञानमुत्पादयेत्।
शिक्षित-संस्कृत-जनो, निःस्वार्थो भ्रष्टमाचरति न।।

निःस्वार्थे जने पुनर्, भवन्ति न कदापि पूर्वोक्त-दोषाः।
ततः स्वयमसौ हि सुखी, परेषामपि न छिनत्ति सुखम्।।

अतो हि ज्ञान-दीपं, प्रज्वाल्याज्ञान-तमो-विनाशने।
प्रवर्त्ततां द्रुतमेषा, माता लक्ष्मीः कृपया जगति।।

ज्ञान-दीपेन विविच्य, कार्याकार्यं स्वं कर्म मनुष्यः।
कार्यं हि कर्म कृत्वा, भवतु सुखी सुखयतु चापरान्।।

यस्माद् मनुष्य-योनौ, जन्मोपलब्धिर्भवतु सार्थिकाऽत्र।
अन्यथा पशुरिव कर्म-, शीलेऽत्र पशौ च भेदः कः?।।

इदमेव चिन्तयित्वा, विश्व-कल्याण-कामनया सदैव।
अयि श्रद्धेयवर्याः, श्रीसत्यव्रतशास्त्रि-महाभागाः।।

इदानीमिमां लक्ष्मीं, मातरं प्रपूज्य प्रणम्य चेत्येव।
पुनः पुनर्याचेऽहं, विनीत-नारायणकाङ्करः।।

# शब्दानुक्रमणिका

## I

### भूखण्ड-देश-प्रदेश नामानुक्रमणी



## II

### नगरनामानुक्रमणी

## III

## ग्रन्थनामानुक्रमणी

## IV

## संस्कृतपत्रिकानामानुक्रमणी



## V

## संस्थानामानुक्रमणी



## VI

## व्यक्तिविशेषनामानुक्रमणी

## VII

## विशिष्ट शब्दानुक्रमणी



## VIII

## सूक्त्यनुक्रमणी

## IX

## छन्दोऽनुक्रमणी